# महारथी

## श्री कर्णचरितामृतम् महाकाव्यम्

महाकविः
गुलाबचन्द्र चूलेट "पाटलेन्दुः"

प्रकाशक
दिग्विजय प्रकाशनम्
(पं. सीतारामजी चूलेट धर्मार्थ प्रन्यासान्तर्गतम्)
प्लॉट नं. 7, नारायण कालोनी, मंगोड़ी वालों की बगीची के पीछे,
ब्रह्मपुरी–जयपुरम्

प्रकाशक :
श्रीकान्त शर्मा, सी. ए.

सम्पादक :
डॉ० रमाकान्त शर्मा

उप-सम्पादक :
डॉ० गीता शर्मा



सहयोगः
ब्रह्मदत्त शर्मा
वैद्य गोकुलचन्द्र शर्मा

अर्थ-सहयोग :
राजस्थान संस्कृत संगमः, जयपुरम्

प्रथम संस्करणम् :
7 फरवरी, 1990



मूल्यम् : 170 रुप्यकाणि

प्रेरक :
भवानी शंकर शर्मा
भवानी टावर्स, आई० आई० टी०, बम्बई-76

मुद्रणम् :
गजेन्द्र प्रिन्टर्स
किशनपोल बाजार, जयपुरम्

॥ श्रीः ॥

# समर्पणम्

"सीतारामेति" विख्यातान् ।
'हलभानि"ति शब्दितान् ॥
पितामहाँश्च जनकान् ।
विबुधेन्द्रान् नमाम्यहम् ॥ १ ॥

एतेभ्य एव भक्तेभ्यः ।
संस्कृतेः संस्कृतस्य च ॥
पुष्पायितं महाकाव्यम् ।
श्रद्धयैतत् समर्प्यते ॥ २ ॥

॰ विद्यया विन्दतेऽमृतम् ॰
दूरभाष कार्यालय : 664003 निवास : 666108
डॉ॰ मण्डन मिश्र
कुलपति
श्री लाल बहादुर शास्त्री राष्ट्रीय संस्कृत विद्यापीठ
(विश्वविद्यालयवत्)
कटवारिया सराय, नई दिल्ली-110016

दिनांक : 7 मई, 1990

मैंने आचार्य पं. गुलाबचन्द्र चुलेट पाटलेन्दु द्वारा लिखित महारथी काव्य का अध्ययन किया। श्री पाटलेन्दु जी बाल्यकाल से ही मेरे सहपाठी रहे हैं, हमलोग एक ही गुरु के विद्यार्थी रहे हैं। अध्ययनकाल में भी इनकी प्रतिभा अतिशय चमत्कारपूर्ण थी। विद्यालय में इनका एक विशेष स्थान था। विशेषकर व्याकरणशास्त्र पर स्थान-स्थान पर आयोजित शास्त्र चर्चाओं में इनने विशेष प्रतिष्ठा अर्जित की थी। व्याकरण और साहित्य के साथ ज्योतिष और कर्मकाण्ड विषय पर भी इनका परम्परागत अध्ययन विशेष रूप से प्रशंसनीय रहा है। इनका वैदुष्य और साहित्य साधना निरन्तर प्रगति की ओर बढ़ती गयी और सारे देश में विभिन्न क्षेत्रों में प्रतिष्ठा अर्जित की। इनके पितामह पण्डितराज श्री सीताराम जी चुलेट एक सिद्ध मनीषी के रूप में विख्यात थे और उनकी भविष्य-वाणियाँ बहुत ही सत्य होती थी। अपने पितामह और गुरुओं से प्राप्त विद्या को आचार्य-प्रवर श्री गुलाबचन्द्र जी ने फलवती बनाया और उसी के एक पूर्ण और अभिनन्दनीय प्रयास का मूर्तरूप दानवीर जैसे महान् व्यक्ति पर लिखित महारथी नामक यह महाकाव्य हमारे समक्ष है।

यह प्रसन्नता का विषय है कि राजकीय सेवा से विश्राम ग्रहण करने के अनन्तर केन्द्रीय संस्कृत विद्यापीठ, जयपुर में शास्त्रचूड़ामणि आचार्य के रूप में अपनी सेवाएं अर्पित करते रहे हैं। इनकी विद्वत्ता और काव्य-प्रतिभा का बहुत ही समन्वित स्वरूप इस महाकाव्य में देखने को मिलता है। इस महाकाव्य की रचना के लिए वे हमारे अभिनन्दन के पात्र हैं।

मेरा विश्वास है कि इस महाकाव्य के माध्यम से राष्ट्र में शौर्य और दानवीरता की प्रतिष्ठा होगी।

- डा॰ मण्डन मिश्र

॥ श्रीः ॥

# उपोद्घातः

□ डा० रामचन्द्र द्विवेदः

पं. गुलाबचन्द्रचूलेटपाटलेन्दुर्धर्मशास्त्रादिषु विश्रुतयशाः जयपुर गौरवं संस्कृतज्ञानां मध्येऽद्याऽपि स्वमहिम्नाऽपूर्वं प्रकर्ष निनीषते ।

एक विंशति सर्गात्मको "महारथी" तिनाम्ना प्रख्यातिमा पादितः "श्रीकर्णचरितामृतम् महाकाव्य" मिति संज्ञापितस्तस्य काव्य प्रबन्धः काव्यरसिकानां वदान्य चरित श्रवण पूतात्मनां महात्मनां मनांसि काव्यगुणै राल्हादयिष्यत्यत्र नास्ति मे संशोति लेशोऽपि ।

विरल-विरलाः सन्त्येतादृशाः कवि प्रवराः ये अधुनातनान् प्रभून् प्राचीनान् वा नायकान् रामादीनपि विहाय स्वमातृ-परित्य-क्तान् स्व गुणगण गरिम्णा सर्वानन्यान्यक्कुर्वतः कर्णसदृशान् महापुरुषान् महाकाव्ये नायकपदे प्रतिष्ठाययितुं समीहन्ते । कर्णस्य महाकाव्य कल्पनयैव धन्योऽयं सुकविः ।

प्राधान्येन शृंगारवैराग्यप्रमुखं संस्कृत साहित्यम् । वीर रस प्रमुखान्यल्पानि सन्ति महाकाव्यानि; भारवेः किराताऽर्जुनीयम् माघस्य शिशुपालवधम् यथा सुप्रसिद्धम् न तथा किम-प्यन्यन्यन्महाकाव्यं वीररसयाङ्गि त्वं प्रदर्शयितुं साम्प्रतं प्रवृत्तम् ।

वाक्यार्थीभूतं वीररसं कर्णचरित्रव्याजेन निरूपयितुं प्रवृत्तोऽयं महाकवि र्वस्तुतोऽस्माकं देशस्य नेतृ वर्गे गुणगण लोप-भिया भीतः सुकुमार पथं परित्यज्य वीरोचित मार्ग माश्रित्य राष्ट्रस्योन्नत्यै सर्वानस्मान् प्रेरयतीव । महाकवि र्वाल्मीकिः

स्वरामायण रचनया 'कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् इति प्रश्न मुदटं कयत् । गुणवान् वीर्यवांश्च महापुरुषः साम्प्रातिक भारतीय समाजेऽप्यन्वेषणीयो वर्तते येनास्माकं देशस्य समस्यानां समाधानं भवेत् । वाल्मीकि र्गुणवत्तां वीर्यवत्ताञ्च व्याख्यातुमेत्र नायक स्वरूप वर्णन प्रसङ्गेन बभाषे कस्य विभ्यति देवाश्च जातरोषस्य संयुगे' गुणवतो वीर्यवतश्च पुरुषस्य रोषेण देवाः अपि प्रकम्स्येरन् । एतदेवलक्षणं गुणवतो वीर्यवत्तायाः ।

यथा वाल्मीकिना वीरस्य गुणिनो महापुरुषस्यान्वेषणं स्व-काव्य व्याजेन देश रक्षार्थं कृतं तथा विधमेत्रान्वेषणं मे प्रतिभाति श्रीकर्ण चरितामृतकर्तुः पाटलेन्दुमहाकवेः । वीरोऽत्र मुख्योरस स्तस्य चाविरोधः शृंगारेण । तयोश्चाङ्गाऽङ्गि भावेना प्रमादेन निबन्धनमत्रमहाकाव्ये सुतरामुपलक्ष्यते । शैशवे मात्रा परि-त्याग काले तथाऽऽशीराशिभि र्योजितः कर्णः । तथाहि–आयुः कीर्तिं जयं युद्धे शस्त्राऽस्त्रेष्वति कौशलं ।

वलं विधां च लक्ष्मीञ्च प्रदद्याद् भगवान् रविः ।
दारिद्र्यद्राविणीं लोके सर्वोत्तर वदान्यताम् ।।
देव विस्मापकं शौर्यं प्रदद्याद् भगवान् रविः ।
एकेनैव महाशक्तिं सर्वं दिक्चक्रजित्वरीम् ।
महारथित्वं मूर्द्धन्यं प्रदद्याद् भगवान् रविः ।। २०-२२-२७

शिशोः कर्णस्य रूपं, वात्सल्यं विवर्द्धयति
तस्य नैसर्गिकमहिमानं च प्रकटयति–

सौर तेजःसमायुक्तं विकसन्नयनाम्बुजम् ।
मातुरुत्सङ्गमारूढं हेमकेशं हसन्मुखम् ।।
पिवन्तं जननीस्तन्यं पीन मानन्द वर्द्धनम् ।
मध्ये मध्ये च विश्रम्य पश्यन्तं जननी मुखम् ।।
चुम्बितञ्च प्रहर्षन्त्या मात्रा वात्सल्ययुक्तया ।

लालितं स्वकराब्जाभ्याममन्दानन्द मूढया ।। २.-२८-३१

नैतादृशं मात्रा परित्यज्यमानं महिम मण्डितं शिशुमुखंदृष्ट मन्यत्र रघुवंशादौ शाकुन्तलादिषु वा ।

वाक्यार्थीभूतो वीररसः सर्वत्र सूत्रात्मतया समासादित स्वरूपोऽपि श्लोके ष्वेतेषु विशेषतो कर्ण रसायनो भवति । तत्र चालं करागां समीक्ष्य विनिवेशनं चारुता मावहति । तद्यथा–

'कर्णाशुगैः कारकतामुपेतैः शत्रोः क्रिया कर्म समास सन्धि- ।
विसर्ग लोप प्रणिपातपूर्णं रणाङ्गणं व्याकरणं बभूव ।। २१-३६

तथैव–

'ज्या चापकर्णाकुलदीर्घवृत्तं सुदृश्यवीजग्रह राशिचक्रम्
महाशनि ध्वंसित केतुदण्डं ज्योतिर्महाशास्त्र मिवाऽवभासे ।

श्लेषोत्प्रेक्षानिपुणोऽयं महाकवी रणाङ्गणे शृंगार २१-४० मारचयति–

ते क्षत्रियाः कुण्डलिनो युवानः ।
परस्परं बाणविभग्न देहाः ।।
कुम्भेषु लीनाः पतिताः गजानां ।
कुचेषु सुप्ताः इव कामिनीनाम् ।।

नायमनङ्गविस्तारः यथाहि "नाभ्यूरु जघन स्पर्शीत्यादि पद्ये ।

वैवाहिक नाम्नि सप्तम सर्गे तदनु च दाम्पत्य प्रेमोल्ल सितेऽष्टमे कान्दर्पिके सर्गे शृंगारः स्वप्रौढिमानं प्रदर्शयन्नप्यङ्गतां न जहाति ।

वीररसाविर्भावभूमिकायां कृष्ण कृतं कर्णवर्णनमाकर्षणं महाकाव्यस्याऽस्य—

,पश्याऽर्जुन ! क्षिप्रमिमं मृगेन्द्रं विदारितास्यंतव भक्षणाय ।
लुण्ठन्त मुच्चै स्तरसा यशांसि रणे समेषामपि पाण्डवानाम् ।।

यत्रत्वदियाः प्रहरन्ति योधाः तत्रैव पश्यन्ति वसुं दिशायाम् ।
भीमश्च साम्मुख्यममुष्य लब्धा प्रयाति दूरं समरान्तरेषु ।।
करालतालाघवपौरुषाणि प्रहारविक्रान्त्यनुगर्जितानि ।
संग्राम वन्यां चरतो यथेच्छं प्रमाणयन्त्यस्य जयं त्रिलोक्याम् ।।
जानाम्यवश्यञ्च वलं त्वदीयं त्वांच प्रशंसामि वही रणेषु ।
प्रारभ्मतः किन्तु महाप्रवीरं पश्यामि कर्णं मनसा भवत्तः ।।
अपि च— २१.६१-६४

सीमान्तशौर्यं किलदृश्यमस्य सुराऽसुराजेयमिमं प्रवीरम् ।
गाण्डीव चापं च सुदर्शनं च हतप्रभंस्यात्खलु वीक्ष्य कर्णम् ।।'
२१-६५

वीररसस्यापूर्व विच्छित्ति चित्रितानि सन्त्यनेकानि पद्यानि येषु एकविंशति सर्गस्य ८०-८२ विशिष्यानु सन्धेयानि ।

यथा कृष्ण कृता कर्णप्रशंसा सहृदय-हृदय संवादिनी तथैव कृष्णा कृता कर्णप्रशंसाऽनितरसाधारण वैशिष्ट्येन हृदयानि हरति । तथाहि—

नयनरचिततृष्णा द्रष्टुमङ्गाऽवनीशम् ।
रति-पति मिव कृष्णा भ्रान्ति मूरी चकार ।।
अनितरनृपवेध्ये तेन विद्धेऽपि मत्स्ये ।
वर-वरण-विमूढां ज्ञान-हीनां स्वकीयाम् ।।
पुनरपि च सतृष्णं संकुचन्नेत्र पद्मा ।
रवितनय मुखेन्दो श्चन्द्रिकाया श्चकोरी ।।
वसुगत सुमनस्का पञ्चभर्त्री चिराय ।
विविधवुधवयस्या नैव शान्ति प्रपेदे ।।
१२-१४-१५

कर्ण गुणाऽकृष्टा कृष्णेयम् स्मारयति प्राचीनकवेः कस्य

चनरीतिं 'कृष्णाऽर्जुनाऽनु रक्ताऽपि दृष्टिः कर्णाऽवलम्बिनी' इति पद्यार्द्धे उपवर्णितताम् ।

कर्णस्य वीरता, दान महिम्नाऽपूर्वांख्यातिं भजते इति विदित मेव विदित वेदितव्यानाम् । इन्द्रभिक्षु र्नामके सप्तदश सर्गेऽस्य चित्रणं सविशेष मत्र कृतम् । तत्रैव कर्णः उद्घोषयति—

शापाः अनेके विपुलाः वराश्च न नाशयन्ति न च तारयन्ति ।
महामनुष्याः स्वभुजैर्वलेन समादधन्ति प्रवलाः समस्याः ।।
धर्मो मदीयश्च परोपकारः कर्तव्यनिष्ठा किल कालपृष्ठम् ।
सत्यप्रियत्वं धननित्य दानं युद्धं ममैतद् वरदान मस्ति ।।
१७.७५-७६

भिक्षु रूपेण प्राप्त मिन्द्रञ्च कर्णः तस्य तनयायार्जुनाय जीवदानं ददाति-"तद्याहि भिक्षो ! तनयाय देहि, मद्दतभिक्षोद्भव जीवदानं" महाकवि कृतः शब्दालंकार-विन्यासः पदे पदे सुघटितोऽपि सुकुमारतां न जहाति रसाऽनु गुणताञ्च प्रतिपद माविष्करोति । तथाहि—

'अस्मिन्नृ तौ स्वे परमोच्चराशौ रविं दधानेऽप्यरविन्द धाने ।
कर्णस्य कर्णाऽन्तचरं स्वचापं टंकारमास च पुष्पधन्वा ।।
७-२४

तथैवात्राऽपि-'धनुधर्रत्वं परिसन्दधाने सकुण्डलेऽकुण्डलितां दधाने । 'श्लेषः सर्वत्र पुष्णाति प्रायो वक्रोक्तिषुश्रिय' मिति काव्याऽदर्शकाराः । श्लेषार्थे निदर्शनतां भजते पद्यमिदम्—

द्रुतं द्रुतद्रुः परिशान्त धृष्टः ।
आक्रान्तभीमो व्यथितार्जुनश्च ।।
स्वयंवरा कज्जलिताऽश्रुवर्षैः ।
शान्तोऽभवत्कर्ण महादवाग्निः ।। १०.४५

कर्णस्य शासन व्यवस्था प्रसङ्गेन परिसंख्याऽलंकार चारुत्व मावर्जयत्यालंकारिकाणां चेतान्सि । तथाहि—

तच्छाशने यौवनशालिनीनाम् ।
केशोच्चयाः श्यामलतामुपेयुः ।।
वक्रत्व मासीदपि केवलायां ।
शिवोत्तमाङ्गे शशिनः कलायाम् ।।
उल्लंघनं श्रौत पथस्य नित्यम् ।
विलासिनीनां नयनान्य कुर्वन् ।।
अन्योऽन्य संघर्षरतौ सदाऽस्ताम् ।
भृशं कुचा वेव कृशोदरीणाम् ।। १५-५६

एतादृशानि पद्यान्येकतः वाणभट्टादि महाकवीनां वक्रोक्ति मार्ग निपुणानि वचांसि स्मारयन्ति अपरतः संस्कृत कवीनां भारवि माघ प्रभृतीनां पतत्प्रकर्षवतां राज्ञामुपदेशार्थम् कृतं काव्य मार्गं प्रदर्शयन्ति ।

वस्तुतः संस्कृत काव्य परम्परा वाल्मीकेरारभ्य राष्ट्रस्य सार्वभौम समुत्कर्षार्थ मेव प्रवृत्ता, तामेव महतीं सुप्रतिष्ठां महाकवि परम्परा मनु सरति । सुकुभार वस्तुनि साहित्ये, सुतीक्ष्णे शास्त्रमार्गे च कुशलोऽयं महाकविः ।

पाटलेन्दुमहाकाव्य मूर्जितं सरसं मधु ।
कर्णामृत मिवाऽऽभाति पिवन्तु रसिकाः मुदा ।।

अक्षय तृतीया
दिनांकम् २७.४.९०

डा० रामचन्द्र द्विवेदः
प्रोफेसर संस्कृत विभाग
अध्यक्ष :–कला संकाय एवम्
निदेशक :–जैन अनुशीलन केन्द्र
राजस्थान विश्व विद्यालय, जयपुर ।

# पुष्पिका

यदीष्यते भारतवीर भूमेः, अखण्ड तैकत्वसुरक्षणञ्च ।
आतङ्क वादस्य परा प्रशन्तिः, तदा महाकाव्यमिदम् सुसेव्यम् ।।

प्रशासकै श्चाऽप्यथ नेतृवर्गैः, दिग्दर्शकं प्रोज्वल-राजनीतेः ।
समस्त सामाजिकता-समेतं, पेयम सदा कर्ण-कथामृतं प्राक् ।।

दानेच युद्धेच महाप्रवीर-, कर्णस्य काव्येऽति मनोहरेऽस्मिन् ।
शृङ्गारितो वीररसः प्रकामं, प्रोल्लासितः सत्कविना विनाऽघम् ।।

गुणाऽन्विता दृश्य सुचारु वृत्ता, ऽलङ्कार झङ्कार चमत्कृताङ्गी ।
रसात्मिकेयम् कुलकामिनीव, कृतिः सता मादर-पात्र मस्ति ।।

सुचित्रयन् भारत-संस्कृतिञ्च, सु प्राञ्जले नैव च संस्कृतेन ।
साहित्य सेवां विदधान एषः, कृती सतामादर-पात्र मस्ति ।।

साहित्य विभागाध्यक्ष, डा० जगन्नाथपाण्डेयः के. सं. वि जयपुर

---

# शुभोऽभिलाषः

छन्दोभि र्विविधैः सु-भाव भरितै रङ्गीकृतेवाङ्गकैः ।
नानालङ्कृतिभिर्गुणै रनु गुणा सुव्यक्त लावण्यका ।।
सारल्ये सुगमाऽपि नूतन पदे साहाय्य मालक्ष्यते ।
काव्येऽस्मिन्नव कामिनीव कविता कुर्यात्सतां कौतुकम् ।।१।।

गुणोल्लसत्कर्ण-कथोज्वलं महा ।
काव्यं जनाह्लादकरं भवेदिदम् ।।
सोमाक्षिसर्गै रवगुम्फितं नवं ।
गुलाबचन्द्रेण बुधेन निर्मितम् ।।२।।

समर्चनं राष्ट्रिय सद्गुणानाम् ।
निदर्शनं लोकहिते रतानाम् ।।
सुदर्शनं काव्यमिदम् कलानाम् ।
सचेतसां चेतसि संचकास्तु ।।३।।

धर्म शास्त्र विभाध्यक्ष, आचार्य पं. राधाकृष्ण शास्त्री
महाराजा संस्कृत कालेज, जयपुर

रामनवमी 4.4 90

॥ श्रीः ॥

# आशंसनम्

वीरपूजकेऽस्मिन् भारते वीराणां जीवनान्याधृत्य रचितानां काव्यानां, नाटकानामुपन्यासानाञ्च सुचिराऽनुवृत्ता परम्पराऽस्ति । तथाऽपि ज्येष्ठस्य कौन्तेयस्य वीरवरस्य कर्णस्य शौर्यमुपलक्ष्य किञ्चिन महाकाव्यम् संस्कृते केनचन कविवरेण संगुम्फितं स्यादद्यावधीति न स्मरामि ।

विद्वत्तल्लजेन पं. श्री गुलाबचन्द्र शर्मणा "पाटलेन्दु" रित्यपराऽभिधानेन कर्णस्य जीवन मालम्ब्योपनिबद्धं महारथीत्याख्यम् महाकाव्यमनया दृष्ट्या रिक्तेरस्याः पूर्तिमपि करिष्यति, संस्कृत काव्य जगति च विशिष्टं किञ्चन स्थानं लप्स्यत इत्याशास्यते । मत्पितुः स्व. भट्ट श्री मथुरानाथ शास्त्रिणो मञ्जुनाथाऽपरनाम्नः स्वनाम धन्यस्य महाकवेः सकाशात्काव्य शास्त्रं चाभ्यस्य श्री गुलाबचन्द्र शर्मणा संस्कृते निरन्तरं काव्य सर्जना कर्म परिशीलितमिति प्रमोदावहम् ।

महाकाव्येऽस्मिन् कर्णस्य चरित्रं सरलया प्राञ्जलया च भाषया उपजात्यनुष्टुपमादि छन्दःसु, ऋतु वर्णन-चन्द्रोदय वर्णनादि समावेश संस्कृतं, प्रारम्भे मंगलाचरणपुरःसरमेक विंशति सर्गेषूपनिबद्धमिति महाकाव्यस्य प्राग्भिराचार्यैराम्नातानि सर्वाण्यपि लक्षणान्यत्र साधु समन्वयन्ते ।

न केवलं महाभारतादेवाऽपित्वन्येभ्योऽपि पुराणेभ्यः कर्णस्य चरित्रमुल्लिखन्ति तथ्यानि संकलय्य तस्य सम्पूर्णमपि चरितं प्रेष्ठस्य, दानिनो, धनुर्धरस्य, दीनोद्धार परायणस्य आतङ्क-दमन-

दुर्नयात्याचार विरोधिनो महापुरुषस्य जीवनवृत्तमिव महनीयया रीत्याऽत्र वर्णितमस्ति ।

सूतपुत्रेतिबहुधान्यकृति-पात्रत्वं गमितोऽयं सूर्य-सुतः सुमहानोजस्वी क्षात्रवर्चसमूर्तिश्चाऽभूत्किन्त्वधिरथेन सूतेन लालितः पालितश्चेति लिङ्गेन सूतपुत्राऽपदेशभाक् संजात इति सर्वे विदन्ति ।

पाटलेन्दुनाऽस्मिन्काव्ये वर्णितमस्ति यत्सोऽधिरथोऽपि सारथित्वेन कामं सूत इति व्यपदिश्यताम्, किन्तुजन्मना क्षत्रिय एवाऽभूत्, ययाति वंशे लब्ध जन्मत्वात् । सारथित्वन्तु भगवता वासुदेवेन, शल्यराजेन, अन्यैश्च बहुभिः क्षत्रियैर्बहुधा निर्व्यूढमासीत् ।

स्वकीय चरितनायकस्य साङ्गोपाङ्गं जीवनवृत्तं संजिगुम्फिषुणा कविना कर्णस्य, धनुर्वेदशिक्षा, वृषाली, सुप्रिया इत्याख्ययोः राजकुमार्योः पाणिग्रहणम्, ऋतुविहारः, दिग्विजयः, सूर्य-सूयाख्य मखस्याऽऽयोजनम् जामदग्न्याद् दिव्याऽस्त्र प्राप्तिः, महाभारत समरे शौर्यम्, अन्ते च दिव्यरथमारुह्य सूर्य लोकप्रयाणं सूर्य सायुज्य प्राप्तिश्चेत्यादीनि वृत्तानि यथायथमुप निवेशितानि, वृषसेन नाम्नः पुत्रस्योल्लेखोऽपि विहितः ।

कर्णस्य चारित्रिकेषु गुणेषु जाति भेदमविगणय्य सर्वेषां साहाय्यम् ("उच्चत्व-नीचत्व भिदा विचारो, जातो ग्रहेष्वेव न मानवेषु" इत्यादि शब्दैः कविना द्योतितोऽयं गुणः) आतङ्कवादस्य दमनं, दलितोद्धारम् परायणता इत्यादयो गुणाः आधुनिकेऽस्मिन् युगे संगतिं विभ्रतीति नवयुगाऽनुरूपतयाऽप्यस्य काव्यस्य बहुषु स्थलेषु प्राप्स्यते नवीनैरपि पाठकैः ।

अन्येषामपि पात्राणां चरित्राणि तत्तदनुरूपाभिर्घटनाभिः शब्दैश्चाऽभिलिखितानि, यथा कुन्त्याः स्नेहः कर्णे, कर्णपत्न्यां वृषाल्याञ्च प्रारम्भादेवाऽभूत् । सर्वदा चास्थादिति कविना स्फुटो कृतमस्ति । शिशुपाल-जरासन्ध-द्रुपदादयोऽस्मै द्रुह्यन्ति स्म, अयञ्चोदाराशयोऽभूत् दुःशासनेन पाञ्चाल्याः वस्त्राऽपहार समयेऽप्यनेन नैतत्कर्म समर्थितमपितु तदिदं दृष्ट्वा सुतरां कुपितोऽय मभूदित्यादि चरित्र चित्रणम् चरित्र वर्णन चातुर्यम् कवेर्व्यनक्ति ।

इत्थंवृत्त वर्णन चरित्रवर्णनाभ्यां सहैव प्रकृति वर्णनम् (ऋतु वर्णनादि), नीति वर्णनम् (पृथायाः मातृवात्सल्याख्ये सर्गे) शासनवर्णनम्, (दिग्विजयाख्ये सर्गे) दिग्विजय वर्णनमित्याद्यनेन कविनाऽस्मिन्काव्ये सं दृब्धम् ।

अन्तेच स्ववंश वर्णनमपि परिशिष्ट रूपेण संयोजितं कवि वृत्तवर्णनं प्रस्तौति । युद्धवर्णने, नगरवर्णने चालङ्काराणां समावेशः प्राचीनपद्धत्यनुसारी । सर्गान्ते छन्दोभेदोऽपि महाकाव्यपथमनुसृत्य कृतोऽस्ति । छन्दो योजने, पाणिनीय व्याकरणस्या विकलमनुसरणे च यत्किञ्चित् स्वाच्छन्द्यम्, स्वातन्त्र्य युगेऽस्मिन् कवयद्भिः कविभिरुपयुज्यते एव । तथाऽपि पाटलेन्दो रस्मिन् काव्ये न तावत् स्वाच्छन्द्यमवलोक्यते, यदन्येषामाधुनिककवीनां कृतिष्वनुपदमनुभूयत इति विलोक्य सन्तुष्येयुः काव्यरसिकाः ।

महाकाव्यमिदम् प्रमाणयति यद्द्याऽपि पौराणिकानां-पात्राणां चरित्रमाधारीकृत्य काव्य-सर्जना संस्कृतेऽक्षुण्णा प्रचलति । अनेन हि गीर्वाणगिरोऽमरता, सार्वदेशिकता, सार्वकालिकता चाऽपि प्रमाण्यत इति प्रमोदास्पदं संस्कृत सेविनाम् ।

जयपुरोपान्तजनेर्विदुषोऽस्य सेयं कृतिः, सन्तोषयति काव्य-रसिकान्, समेधयिष्यति सुर-सरस्वती-साहित्य-भण्डारम्, प्रसारयिष्यति च कवेर्यश इत्याशंसानोऽभ्यर्थयामि संस्कृत काव्य मर्म विदः पाठकान् यदस्य कवेरिमं प्रयासं स्वकीय कृपादृशा सफलयन्तु ।

महाशिवरात्रिः सम्वत् २०४६,
२३ फरवरी १६६०
C/o पृथ्वीराज मार्गः
जयपुरम्

**देवर्षिकलानाथ शास्त्री**
निदेशकः
भाषा विभागः,
राजस्थान शासनम्

॥ श्रीः ॥

# प्राक्कथनम्

सिंहास्यं च यथा प्राप्य।
न जीवन्ति मृगाः क्वचित् ॥
तथा कर्णं मनु प्राप्य।
न जीवन्ति महारथाः ॥ ३ ॥ —महर्षिः, वेदव्यासः ॥

विदितमेवैतत्समेषामपि शेमुषीजुषां विदुषां यत्खलु समस्तेऽपि वेद-वेदाङ्ग-विज्ञानमये वाङ्मये "महाभारतम्" नाम महाग्रन्थः प्रशस्तां प्रशस्तिं बिभर्ति। अपि चास्य महाग्रन्थस्य सर्वेष्वपि पात्रेषु सर्वतो मुखैर्गुणैः "कर्ण" इति वर्ण-समुदायो विशिष्टम् वैशिष्टयम् भजते।

भगवता वेदव्यासेनाऽपि स्व-विरचिते "महाभारते" स्थाने-स्थाने इदम्, स्वीकृतमस्ति। इयति सत्यपि प्रमुखपात्रस्यैतस्य चरितम्, विभिन्नेषु पर्वसु विकीर्णमिव दृश्यते नतु श्रृङ्खला-बद्धम्। अयं हि "ज्येष्ठ-कौन्तेयः", उत्पत्या, जात्या, युद्धवीरतया, दानवीरतया, ब्रह्मण्यतया, धनुर्विद्यया, दिग्विजयेन, स्वाभिमानेन, राजनीत्या, दयालुतया, औदार्येण, सत्यवादित्वेन, निर्भीकत्वेन, सौन्दर्येण, तेजस्वितया, न्याय-प्रियत्वेन, बलेन च महाभारतस्य सर्वानपि महारथानतिशेते।

सत्स्वपि सर्वेष्वेतेषु गुणेषु, एतज्जीवनस्य चित्रणम्; प्रामुख्येन श्रृङ्खला-बद्धम् कथन्न निबद्धम्? शैशवस्य-यौवनस्य च; परिवारस्य शासनस्य च; दिग्विजयस्य वीरतायाश्च सामा-जिकत्वस्य-नृपत्वस्य च दानस्य-औदार्यस्य च यथार्थस्य-आदर्शस्य

च चित्रणे अत्यावश्यकत्वेऽपि महामुनिः कार्पण्यम् कथमभजदिति तु स एव जानातु ।

कवच-कुण्डल-देदीप्यमानवर्णः कर्णः; बाल्यकाले अधिरथेन शत्रुञ्जयेन च सह "चम्पानगरात्" हस्तिनापुरं समाजगाम, तद्दिनादेव एतस्य जन्मजातेन वर्चसा प्रभावितैः भीष्म-द्रोण-कृपादिभिः यादृशो व्यवहारः एनम्प्रति कृतः सस्तेषां सर्वेषामप्यमानवीयम् दृष्टि-संकोचं निःसंकोचं साधयति ।

परन्तथाऽपि तदानीन्तनः हस्तिनापुर-पुरन्दरः धृतराष्ट्रः स्वकीय मित्रपुत्राय "मित्राऽऽत्मजाय" समाश्रयं, स-प्रश्रयं प्रदत्तवान् । युद्ध व्यायाम-शिक्षण-प्रशिक्षणालये द्रोणाचार्य-प्राचार्यत्व सञ्चाल्यमानेतत्रत्यशस्त्रास्त्रा द्युपकरणानामुपयोगे चानन्य हस्तक्षेप्यामनुमतिम् सौदार्यम् निर्बाधञ्च प्रददौ ।

स्व-तनयं शिक्षितुमधिरथस्य निवेदनेऽपि, बालेऽस्मिन् नामोच्चारणपुरःसरं चरणयोः प्रणतेऽपि, राजन्य-कुमाराणामेव शिक्षकत्व-महत्वाऽभिमानो गुरुर्द्रोणः असाधारणेऽप्यस्मिन् साधारणतामेव पश्यन्, सूर्य-पुत्रमपि स्थूलदृष्टि-प्रभावात् सूत-पुत्रमेव जानन्, दृष्टिपातेऽपि दरिद्रतामन्वभवत् ।

अयमपि स्वाऽवलम्बी बालः; संकुचित विचारधारम् अनुदार विचार-प्रचारं द्रोणम् निज-गुरुत्व-ग्रहणेऽनर्हमर्हन् सकल-ग्रह-गुरुमेव गुरुत्वेनाभ्यर्च्य तन्निदेशेनैव युद्धशालायाम् सर्वतन्त्र-स्वतन्त्रः शस्त्राऽस्त्र विद्याभ्यासे स्वाध्यायस्यैव प्रभावेण; राजन्य कुमाराणामेवाचार्यम् द्रोणाचार्यम् तच्छिष्यांश्च महाश्चर्य कूपे न्यपातयत् ।

समापन-समारोहे चानिच्छत्स्वपि भीष्म-कृप-द्रोणेषु धनुर्विद्यायाम् अर्जुनादीन् सर्वानपि द्रोणशिष्यानतिशेते स्म । एतेनो-

द्घोषितं द्वन्द्व युद्धाऽऽह्वानं न कोऽपि स्वीकर्तुं प्राभवत् कृपश्चार्जुनस्य सर्वं श्रेष्ठतामुद्घोषितुमपि न प्राभवत् । वैचित्र्यमिदम् दृष्ट्वा सुयोधनः सादरमस्मै "अङ्गराज्यम्" समर्प्य तत्रैनमभिसिषेच । "अङ्गराजस्य" जयमुच्चै रुच्चारयामास । सर्वमिदम् वसोः शैक्षणिक जीवनस्य सर्वश्रेष्ठताम् सूचयति ।

शकुने दुर्मन्त्रणेन कौरवैः पाण्डवान् प्रति यो दुर्व्यवहारः कृतस्तत्राऽस्याऽभिरुचिर्नैवासीत् प्रत्युत शकुनिं सुयोधनञ्चाऽप्ययमत्यर्थम् निनिन्द ।

वस्तुतस्तु हस्तिनापुरस्य सिंहासनेऽपि कर्णस्यैव न्यायसंगतः अधिकारः आसीत् । अधिरथस्य ययाति-वंशजत्वात्, हस्तिनापुरस्य ययातिना संस्थापितत्वात्, पाण्डोः धृतराष्ट्रस्य च व्यास पुत्रत्वेनाययाति वंशजत्वात् पाण्डवानां देव-पुत्रत्ववदस्याऽपि देव-पुत्रत्वात्, प्रथमकौन्तेयत्वाच्च । कुन्त्याः लोकाद् भीतिश्च सुप्रसिद्धैव ।

एवमेव द्रौपदी स्वयम्वरे मत्स्यवेधस्य कृतप्रायेऽपि कृतेऽपि च द्रौपद्याः कर्णम्प्रति अराजन्यत्व-कथनमपि नितान्तमसङ्गतमेव । पाण्डवैश्चतुर्भिश्चतुर्दिग्विजयः कृतः परं कर्णेन एकेनैव चतुर्दिग्विजयः कृतः । दुर्योधनस्य युद्धेषु परित्राणम् अवश्यम् प्रतिज्ञातम् निर्व्यूढञ्च परन्तु पाण्डवानाम् राज्याऽपहरणे द्रौपद्याः अपमाने च नास्याऽनुमोदनमासीत् ।

दिव्याऽस्त्र प्राप्त्यर्थम् परशु-रामाग्रे ब्राह्मणत्व कथनमपि न दोषावहम्, अस्य सूर्य-पुत्रत्वात् । सूर्यस्यदिव्य-ज्ञान-ज्योतिर्मयत्वेन ब्रह्मण्यतया ब्राह्मणत्वात् । अतएव परशुरामेण शाप दानोत्तरं महान् पश्चात्तापः कृतः "विजय" धनुर्दानेनायं प्रसादितश्च । परन्तु अयम् स्वकीयस्य आत्मबलस्य महाऽनुभूत्या शाप-वर-

दानयोः कृते महत्त्वम् नैव प्रादात् । एतादृशैः शापै र्वरदानैश्च भीष्माऽर्जुनादयोऽपि यत्र तत्र ग्रस्ताः अभवन् ।

सन्धि दूतः श्रीकृष्णः कर्णस्य हस्तं सादरं गृहीत्वा स्वकीये रथे उपवेश्य स्वयञ्चोपविश्यैनमनुनयति । एतज्जन्मनो रहस्य-मुद्घाटयति सम्पूर्णम् राज्यम् दातु प्रतिजानीते परमनेनेदमेवो-क्तम् "यत् भवता कथितं सत्सर्वम् सत्यम् सम्प्रत्यहमेव लोके राज शब्देन व्यवह्रिये, पाण्डवाः निर्दोषाः, कौरवाश्चासन्मार्गे प्रवृत्ताः सन्ति । परं युद्धे दुर्योधनस्य साहाय्यम् परित्यक्तुम् नैव शक्नो-मीति" अनेनैतच्चरित्रस्य प्राञ्जलत्वम् स्वयमेव सिद्ध्यति ।

ये जनाः नृपाश्चैतस्य नृपत्वम् न स्वीचक्रुस्तान् दिग्-विजये पराजित्य वशंवदान् चकार । कर्णस्य दान वीरत्वन्तु अत्यद्भुतमेवाऽऽसीत् । स्वयमिन्द्रोपि भिक्षुर्भूत्वा स्वेच्छानुसारं दानम् लेभे । यदा महेन्द्रस्यैवैतादृशी स्थितिरासीत्किम्पुनर्महीन्द्रा-णाम् ? सर्वेषामपि निर्धनतां दूरीचकार । कुन्त्याः निवेदना-नन्तरं पाण्डवेभ्यः प्राणदानम् प्रतिज्ञातवान् ।

युद्ध स्थले कर्णम् दृष्ट्वा स्वयम् युधिष्ठिरः स्वकीयां स्थितिम् वर्णयति—

त्रयोदशाहम् वर्षाणि ।
यस्माद् भीतो धनञ्जय ! ।।
न स्म निद्रां लभे रात्रौ ।
न चाहनि सुखम् क्वचित् ।। १ ।।

जाग्रत् स्वपँश्च कौन्तेय ।
कर्णमेव सदाह्यहम् ।।
पश्यामि तत्र तत्रैव ।
कर्ण भूतमिदम् जगत् ।। २ ।।

न प्राप्त पूर्वम् यद् भीष्मात् ।
कृपाद् द्रोणाच्च संयुगे ।।
तत्प्राप्तमद्य मे युद्धे ।
सूतपुत्रात् महारथात् ।। ३ ।।

महर्षिर्वेदव्यासः स्थाने स्थाने कदाचित् परशुराम मुखात् कदाचित् भीष्म मुखात् कदाचिद् द्रोण मुखात् कर्णस्य वीरता-मुपवर्णयति—

"यदेकं पाण्डवाः सर्वे ।
न शेकुरभि वीक्षितुम्" इत्यादि ।

कवच-कुण्डलानाम् दानेऽपि भीमादीनाम् सर्वेषामपि निर्दयम् दलनमकरोत् न च तेषां शस्त्रास्त्रैः एतच्छरीरस्य काऽपि क्षतिरभूदस्याभेद्यचर्मत्वात् । उक्तञ्च महाभारते—

ततः शर महाज्वालो ।
वीर्योष्मा कर्ण पावकः ।।
निर्दहन् पाण्डव वनम् ।
चारु पर्यचरद् रणे ।। ४ ।।

पुनश्च महामुनिना तत्रैव प्रदर्शितम्—

सिंहास्यञ्च यथा प्राप्य ।
न जीवन्ति मृगाः क्वचित् ।।
तथा कर्णमनुप्राप्य ।
न जीवन्ति महारथाः ।। ५ ।।

एवञ्च परिस्थितीनाम् प्रातिकूल्येऽपि जन्मनैवायं बालः उत्तरोत्तरम् शिक्षा-दीक्षयोः स्वाध्याय-बलेनैव परमामुन्नतिम्-कृत्वा स्वकीयं बलम् पौरुषञ्चावलम्ब्य दिग्विजेता राजाऽभूत्,

महारथिनामपि महारथी चाऽभूदिति श्रीकृष्ण-भीष्मादयोऽपि सादरं मन्यन्ते का वार्ता चान्येषाम् ?

एवञ्च कर्णस्य सर्वमपि जीवनम्; महाभारतीयपात्राणाम् मध्ये सर्वोत्तमं सर्वेभ्यो जनेभ्यः प्रेरणादायकञ्चास्तीति विचार्य कर्णस्य साङ्गोपाङ्गम् जीवनम्, महाकाव्यरूपे चित्रितुमत्यावश्यकमिति च मत्वाऽहम्, उद्बाहुर्वामनः फले इवैतच्चरित्र-चित्रणे साहसमकरवम् । दोषाश्च यद्यपि केवलाऽन्वयित्वेन स्वाभाविकाः परन्तथाऽपि तेभ्यो रचनामिमां परिरक्षितुम् मया प्रयतितम् । केवलमिदमेव निवेद्य विरम्यते "समादधति सज्जनाः" ।

।। शुभम् ।।

विदुषां वशंवदः
पं. गुलाबचन्द्र चूलेटः "पाटलेन्दुः"
जयपुरम्

# अनुक्रमणिका

"महारथी" महाकाव्यम् श्रीकर्ण चरितामृतम् ।।
एकविंशति सर्गाढ्यम् अलङ्कारै र्विभूषितम् ।। १ ।।

समुद्र ध्वनिगम्भीरं रस-भाव तरङ्गितम् ।।
राम जन्म दिनारब्धं दीपावल्यां समापितम् ।। २ ।।

मानवीय गुणानाञ्च सभ्यतायाश्च दर्शकम् ।।
विदुषां प्रीतये नूनम् मया वस्तु विनिर्मितम् ।। ३ ।।

॥ श्रीः ॥

# सम्भव : प्रथमः सर्गः

सर्वज्ञं परमात्मतत्वमखिलं बिम्बाधरं श्रीधरम् ।
साक्षात्कल्प महीरुहम् प्रणमतां विद्वत्कवीनां सदा ॥
वीणा-वादन तत्परं श्रुतिपरं सत्यं परस्मात्परम् ।
चन्द्रास्यम् सुतरामहर्निशमहो; दिव्यं महो धीमहि ॥ १ ॥

युगोत्तमे द्वापर नाम धेये ।
धरावतंसेऽमृत रश्मि-वंशे ॥
पृथाऽवृथा सद्गुण सत्प्रशस्तिः ।
शूरस्य गेहम् समलञ्चकार ॥ २ ॥

युद्धेषु तेन प्रिय साहसेन ।
पलायिताः दिक्षु महाभटेन्द्राः ॥
समस्त भू - मण्डल मण्डनेयम् ।
कीर्तिर्यदूनां परिवर्द्धिता ऽभूत् ॥ ३ ॥

सखाऽभवत्तस्य महान् नयज्ञः ।
कुन्ति प्रदेशे खलु कुन्ति-भोजः ॥
विनम्रभूपालकिरीटकोटि - ।
रत्नावली-प्रोज्वलिताङ्घ्रिपद्मः ॥ ४ ॥

स याचमानाय सुतां स्वकीयाम् ।
भोजाय सख्ये प्रददौ स-हर्षम् ॥
आदाय तां सन्तन्ति सौख्य-शून्यः ।
पृथां तदा धर्म-सुतां चकार ॥ ५ ॥

तदा प्रभृत्येव पृथा पृथुश्रीः ।
'कुन्ती'तिनाम्ना परम प्रसिद्धा ।।
अभूच्च लोके क्रमशः कुमारी ।
लोकप्रिया संस्पृहणीयशीला ।। ६ ।।

सा जन्मनैव प्रतिभा-प्रशस्ता ।
सार्वासु विद्यासु जगाम पारम् ।।
कलासु सर्वास्वपि चैवमेव ।
अनन्यतुल्या सुतरां वभूव ।। ७ ।।

सा वीरबाला दृढ साहसत्वात् ।
शस्त्रास्त्र-कौशल्यमवाप शीघ्रम् ।।
व्यूहादि निर्माण विधान दक्षा ।
आसीच्च विश्वे परम-प्रसिद्धा ।। ८ ।।

शनैः शनैः सा परिवर्द्धमाना ।
कैशोर्य-संशोभित गात्रयष्टिः ।।
पारं गताऽभूदपि राजनीतौ ।
आस्ताञ्च बुद्धि-प्रसरौ पुनीतौ ।। ९ ।।

समाज सेवा करणे विलग्ना ।
जनान् समुद्धृत्य च दुःख गर्तात् ।।
नियोजयामास सुख-प्रदेषु ।
कार्येषु राष्ट्रस्य सुशोभितेषु ।। १० ।।

विभिन्न राष्ट्रेष्वपि सा चकार ।
स्वराज्य-नीतेः सुतरां व्यवस्थाम् ।।
पित्रा नियुक्ता परियोजनासु ।
तत्कार्यजातं सफली चकार ।। ११ ।।

विलासभूमिर्नवयौवनस्य ।
क्रीड़ाङ्गणं पुष्प शरासनस्य ।।
रतेर्विचित्रा मधु-पान शाला ।
तस्याः शरीरं सुषमां बभार ।। १२ ।।

संमिश्रणं प्रोज्ज्वल कान्ति-शक्त्योः ।
शोभास्पदम् संगमनं कलानाम् ।।
ध्रुवं पृथिव्यामितराङ्गनाभ्यः ।
आसीद् विशिष्टा हि तदङ्ग-यष्टिः ।। १३ ।।

गृहागतान् पूज्य जनान् स्वयं सा ।
सत्स्वप्यनेकेष्वनुचारकेषु ।।
सम्पूजयामास विधान पूर्वम् ।
श्रद्धा - प्रयुक्तैर्नवगन्धमाल्यैः ।। १४ ।।

अथैकदा तद्भवने सुरम्ये ।
परिभ्रमन् वै भुवनान्तरेषु ।।
दुर्वाऽशनेन प्रसृताऽभिधानो ।
मान्यो मुनीनां समुपस्थितोऽभूत् ।। १५ ।।

द्वाःस्थाः मुनिं तं बहुमान पूर्वम् ।
दुर्वाशनं तप्तदिवाकराभम् ।।
राज्ञः समीपं महिषी - युतस्य ।
प्रवेशयामासुरनल्प - भीताः ।। १६ ।।

दृष्ट्वैव तं स्वीयतपोबलेन ।
शापास्त्र विक्लान्त समस्त लोकम् ।।
अभ्युज्जगाम प्रवरो नृपाणाम् ।
राज्ञ्या समेतः किल कुन्तिभोजः ।। १७ ।।

बद्धाञ्जलिस्तं प्रणतेन मूर्ध्ना ।
रत्नाङ्कुरोद्दीप्तकिरीटकेन ।।
सम्पादितार्चो विधिवत् प्रसूनैः ।
ववन्द पादौ नख-कान्त-कन्ती ।। १८ ।।

अन्तःपुरे स्वे परमे पवित्रे ।
विचित्रशय्यासनचारुशोभे ।।
सुरक्षिते कञ्चुकिभिः सवेत्रैः ।
समानिनायोरुनतिर्नृपस्तम् ।। १९ ।।

उच्चासनासीनमुपास्य सम्यक् ।
स्वयं तदग्रे च सुखोपविष्टः ।।
श्रद्धेयमेनं वचनै र्विनीतैः ।
प्रयोजनात्प्राक्कुशलो न्मुखोऽभूत् ।। २० ।।

विज्ञाय भक्तिम् विशदां नृपस्य ।
स्वीकृत्य शुद्धां मनसा सपर्याम् ।।
प्रसन्नचित्तः प्रहसन् सुमन्दम् ।
मुनिर्बभाषे नृपचक्रशक्रम् ।। २१ ।।

कच्चित्प्रजायां कुशलं नरेन्द्र ! ।
कच्चित्समृद्धं सकलं स्वराज्यम् ।।
कच्चिन्नते शत्रु - भयं जनेषु ।
यथायथं ते खलु वर्षतीन्द्रः ।। २२ ।।

किम् शस्य - पूर्णा हरिता धरित्री ।
फलानि कच्चिच्च रसायनानि ।।
भवन्ति भूरीणि सुख - प्रदानि ।
न रोग दोषाः प्रभवन्ति कच्चित् ।। २३ ।।

पृष्ट्वैव मेनं विरते मुनीन्द्रे ।
प्रसन्न चित्तोऽत्युप जात हर्षः ।।
विनीत मुद्राङ्कित साधुभावः ।
जगाद भूयो वचनं नरेन्द्रः ।। २४ ।।

तपः प्रभावा दति सत्य वाचाम् ।
भवादृशां प्रीतियुतां मुनीनाम् ।।
गृहागतानां शुभदर्शनेन ।
राज्ये सुखम् सर्वं विधं मदीये ।। २५ ।।

एकैव वाञ्छा प्रवलोदया माम् ।
अहर्निशं पीडयति प्रकामम् ।।
भवद्विधानां चरणाऽब्ज सेवा - ।
सौभाग्य-योग्यश्च कथं भवेयम् ।। २६ ।।

लब्ध्वाऽपि देहं खलु मानवस्य ।
न जातु जातो भुवने यशस्वी ।।
तपस्वि-सेवाऽमृत पूर्ण पात्रम् ।
य स्तस्य पुन्सश्च जनि र्निरर्था ।। २७ ।।

तस्मान्महर्षे ! भवने मदीये ।
वसन् भवद् रुच्यनु कूल कालम् ।।
करोतु सेवां परमेश्वरस्य ।
भवार्णवा दुद्धरणं ममाऽपि ।। २८ ।।

तदेतदुद्यानवरे सुरम्ये ।
लसन्त्यमन्दं फल पुष्पवन्तः ।।
यत्र द्रुमा श्चारु हरिल् लताभिः ।
प्रीत्येव संवेष्टितचारुगात्राः ।। २९ ।।

सच्छाय रम्यं स-सुगन्धि वातम् ।
सरोजिनी भिश्च विचित्र शोभम् ।।
निदर्शयामास निवास योग्यम् ।
मुनीशमुद्यान मसौ नरेशः ।। ३० ।।

तन्नन्दनस्य प्रिय-कीर्ति-हारि ।
वनं तपः सिद्धि करं निरीक्ष्य ।।
सु स्वीचकारात्र कियद्दिनानि ।
स्थातुं तपस्याऽति फल प्रदानि ।। ३१ ।।

सञ्जात हर्षः प्रवरो नृपाणाम् ।
दुर्वाससः शीघ्र मुपासनाय ।।
समा जुहाव प्रणयेन कुन्तीम् ।
स्व-धर्म पुत्रीम् किल कुन्ति भोजः ।। ३२ ।।

ततः समासद्य पितु र्निदेशम् ।
उपस्थिता कञ्चन कान्ति कुन्ती ।।
विनीत भावेन कृत प्रणामा ।
तपस्विने चाऽपि ततः स्व-पित्रे ।। ३३ ।।

लब्धप्रसादां मृदुलं हसन्तीम् ।
शास्त्रेष्व तुल्यां प्रतिभां वहन्तीम् ।।
समुद् वहन्तीम् नव यौवनस्य ।
चिन्हानि सर्वाणि जगाद भूपः ।। ३४ ।।

असौ मुनीन्द्रः स्वतपो बलेन ।
जिजाय दिव्यान् विविधाँश्च लोकान् ।।
यावन्निवासञ्च गृहेऽस्मदीये ।
कुर्याः सपर्याम् प्रचुरां किलाऽस्य ।। ३५ ।।

तथेत्युपाश्रुत्य नरेन्द्र कन्या ।
आरभ्य तस्माद् दिवसात्सयत्नम् ।।
आज्ञाऽनुसारं स्व-पितु र्विनम्रा ।
चकार सेवां विविधैः प्रकारैः ।। ३६ ।।

जलञ्च तीर्थस्य पवित्र पात्रे ।
दूर्वा ङ्कुराणि प्रिय-कोमलानि ।।
सुगन्ध - सन्तर्पित मानसानि ।
समर्पयत्तत्कुसुमोत्तमानि ।। ३७ ।।

पूजोप युक्ताऽभिनवाश्च धूपाः ।
प्रकाश मानाः विविधाः प्रदीपाः ।।
गन्धो मनोज्ञः सह चन्दनेन ।
नैवेद्य-पात्राणि निवेदितानि ।। ३८ ।।

आम्राणि पक्वानि स-दाडिमानि ।
द्राक्षाः मनोज्ञाः कदली-फलानि ।।
अत्यक्त वेलाः नव नारि केलाः ।
समर्पिताः जम्बु फलानि तस्मै ।। ३९ ।।

व्रताऽनुकूलानि घृतार्चितानि ।
दुग्धान्यवद्यानि च पायसानि ।।
भोज्यानि मिष्टानि मनोहराणि ।
तस्मै मुनीन्द्राय समर्पितानि ।। ४० ।।

एवम् सभाराधन तत्परा सा ।
सन्तोषयामास तपो निधानम् ।।
अन्तेवसन्तीव विशुद्ध भावा ।
शास्त्राऽनुकूलै र्मधुरै र्वचोभिः ।। ४१ ।।

सुखेन तत्रोपवने नृपस्य ।
तपस्यत स्तीव्रतरं व्यतीयुः ।।
श्रमान्तकानि स्वतपः समस्या - ।
फलोन्मुखानि प्रचुरं दिनानि ।। ४२ ।।

सर्व-स्वतन्त्रः स मुनि र्गमिष्यन् ।
उवाच कुन्तीम् प्रणयेन शिष्याम् ।।
"आवाहनार्थम् स्वगृहे सुराणाम् ।
गृहाण विधां किल देव हूतिम्" ।। ४३ ।।

सद्यः प्रसन्नं प्रसमीक्ष्य विप्रम् ।
तदन्तिकं शीघ्र तरं जगाम ।।
विनम्र भावा चरणौ स्पृशन्ती ।
सूपाविशत्तस्य पुरो महर्षेः ।। ४४ ।।

दुर्वाससा साऽपि पवित्र मूर्तिः ।
सम्पाठिता साऽतिशयं कुमारी ।।
विद्यां सुदिव्यां नितरां समर्थाम् ।
सुराह्वये कार्यविधौ प्रयोज्याम् ।। ४५ ।।

दत्वाऽऽशिषं सोऽपि नृपाय तस्मै ।
ययौ यदृच्छा-विचरन् महर्षिः ।।
अति प्रसन्नाऽनुगता सखीभिः ।
स्वान्तः पुरं साऽपि जगाम कुन्ती ।। ४६ ।।

वृत्तान्त मेनं परिगोपनीयम् ।
अन्यैरवेद्यं सुतरां ररक्ष ।।
चिक्रीड हर्म्येसु सुख प्रदेषु ।
वाताऽनुकूलेषु सुखं किशोरी ।। ४७ ।।

दिनेषु गच्छत्सु चल स्वभावा ।
परीक्षणार्थम् खलु सत्यतायाः ।।
विद्योप देशस्य निजार्जितस्य ।
सा बाल-लौल्याच्च मनश्चकार ।। ४८ ।।

सखीः परित्यज्य विधाय पूजाम् ।
उद्यान-कुञ्जेषु परिभ्रमन्ती ।।
तमो-द्विपं तीक्ष्ण करै र्निहत्य ।
आरूढमुच्चै रुदया चलाग्रम् ।। ४९ ।।

सिंहाकृति व्योम्नि समुच्छलन्तम् ।
प्राच्यां समुत्तप्त सुवर्ण-वर्णम् ।।
प्रचोदकं दिव्यधियः कवीनाम् ।
भर्गो वरेण्यम् सवितु र्ददर्श ।। ५० ।।

त्रिलोक-दीपं सुतरां समीक्ष्य ।
तद्दर्शनाह्लादित हृत्सरोजा ।।
पाद्यार्घ्य पूर्वै र्विविधोपचारैः ।
समर्चयत्तम् तदधीन चेताः ।। ५१ ।।

तदीय तेजस्तरलायताक्षी ।
निकुञ्ज पुञ्ज भ्रमणाऽति मञ्जुः ।।
आवाहने दीप्त सहस्ररश्मेः ।
प्रायुङ्क्त मन्त्रम् मुनिनोपदिष्टम् ।। ५२ ।।

उत्सृज्य तस्मिन् क्षण एव यानम् ।
सप्ताश्व वाह्यम् रुचिरं ख-मध्ये ।।
विभ्रन्नराकार मसह्य तेजाः ।
अवातरद् भानुरसंख्य भानुः ।। ५३ ।।

आलोक्यमायान्त नरं विचित्रम् ।
दिशाननानि प्रतिभासयन्तम् ॥
भान्तं किरीटाङ्गद कुण्डलाद्यैः ।
विभूषणै र्दिव्य विलोलमालम् ॥ ५४ ॥

आरुह्य शीघ्रं भवने स्वकक्षम् ।
अनन्य गम्यं प्रविवेश कुन्ती ॥
तत्रैव देवं प्रविशन्त मारात् ।
ननाम पाद-प्रणता कुमारी ॥ ५५ ॥

उत्थाप्य कन्यां प्रणतां कराभ्याम् ।
दत्वा ऽऽशिषं सन्मधुरैर्वचोभिः ॥
पर्यङ्क-पृष्ठे व्युपवेश्य चैनाम् ।
व्युपाविशत् तत्र सुखम् स्वयञ्च ॥ ५६ ॥

प्रेमाऽनुरक्तेन करेण चास्याः ।
परांमृशन् पङ्कजकोमलाङ्गम् ॥
स-शङ्कनेत्रान्त नितान्त कान्तम् ।
चुचुम्ब सम्फुल्ल मुखारविन्दम् ॥ ५७ ॥

उवाच "मत्सङ्गम-भङ्ग भीरु ! ।
सङ्केत मासाद्य तवागतोऽस्मि ॥
अचञ्चलाभ्यां नयनाञ्चलाभ्याम् ।
पश्याऽऽश्ववश्यम् तव भक्ति-वश्यम्" ॥५८॥

एवं वदन् सर्वं जगन्नमस्यः ।
प्रियान्तरङ्गं कलमङ्गमस्याः ॥
स्वोत्सङ्ग मानीय हसन् सु-मन्दम् ।
रन्तुं प्रवत्तो नलिनी-प्रियोऽसौ ॥ ५९ ॥

निवार्य किञ्चित्सरलं हसन्ती ।
सीमामतिक्रान्त मुवाच चैनम् ॥
"अद्यावधौ निश्चितमस्मि कन्या ।
नाहम् भविष्यामि सतामधन्या" ॥ ६० ॥

श्रुत्वा चिरं विप्रतिपत्तिमस्याः ।
प्रवोधयामास सहस्ररश्मिः ॥
"व्यर्थन्न यात्वागमनं मदीयम् ।
रक्षामि कौमार्य मयि ! त्वदीयम् ॥ ६१ ॥

एवं समाश्वास्य विभुर्दिनस्य ।
निश्चिन्त मेनां रमयाञ्चकार ॥
सन्तोष यन् स्वै र्विविधै र्विलासैः ।
विलासिनी साऽपि वभार गर्भम् ॥ ६२ ॥

एधं सलज्जां सुरताऽवसाने ।
द्वयेऽपि संशुद्ध-पटं व साने ॥
विवक्षुरन्ते नलिनी-सुबन्धुः ।
साम्मुख्यमायाद् द्रुतमेव कुन्त्याः ॥ ६३ ॥

प्रिये ! ममात्यन्त समान तेजाः ।
अभेद्य चर्मा कवचोत्तमेन ॥
चमत्कृताभ्यां कल कुण्डलाभ्याम् ।
सुरक्षितः स्वीय पराक्रमेण ॥ ६४ ॥

समस्त राज्ञां तरसा विजेता ।
सन्त्रासिता सर्व महारथानाम् ॥
प्रदान-वीरो भविता सुभद्रे ! ।
कर्णेन कर्णः प्रबल स्तनूजः ॥ ६५ ॥

इत्येव मुक्त्वोर्द्ध मिते दिनेशे ।
नितान्त मन्तः सलिलेव कुन्ती ॥
धात्री-विभिन्नेन जनेन केना ।
त्यभूददृश्या भवने स्वकीये ॥ ६६ ॥

सिरीष पुष्पायित सौकुमार्या ।
सा सौर तेजः प्रभया चकाशे ॥
धनै स्तिरो भावित सूर्य बिम्बा ।
प्राचीव भास्वत् क्षितिजान्तरेखा ॥ ६७ ॥

काले व्यतीते नवमास युक्ते ।
प्रारम्भ माप्ते दशमेऽपि मासे ॥
वसन्त काले कमनीय शोभे ।
प्रसन्न रूपेषु च दिङ्मुखेषु ॥ ६८ ॥

ग्रहेषु मार्गिष्वनु कूलितेषु ।
स्वोच्च स्थितेषु प्रभयाऽन्वितेषु ॥
नृत्यत्स्वनल्पाऽप्सरसां गणेषु ।
गन्धर्व-युक्ते गगन-प्रदेशे ॥ ६९ ॥

कर्णेन कुन्ती सुषुवे कुमारी ।
सूर्य-प्रभं सत्कवचाऽऽवृताङ्गम् ॥
रत्नोल्लासत्कुण्डल भूषिताऽऽस्यम् ।
कुमार-कल्पम् प्रथमं कुमारम् ॥ ७० ॥

"कर्णे"ति नाम्ना समलङ्कृतं तम् ।
पपौ विशालैर्नयनैः स्व-पुत्रम् ॥
तदन्तरं स-प्रणयं चुचुम्ब ।
वात्सल्यभावाञ्चित मास्यमस्य ॥ ७१ ॥

केनाऽपि न ज्ञातमिदम् प्रवृत्तम् ।
वृत्तं भविष्यच्च कुले नृपस्य ।।
जानाति तत्केवलमेव कुन्ती ।
सेवा-विधात्री विदुषी च धात्री ।। ७२ ।।

।। कर्ण-सम्भवोनाम प्रथमः सर्गः समाप्तः ।।

---

॥ श्री ॥

# सुरक्षणं नाम द्वितीयः सर्गः

अथाऽस्माद् राज भवना
देकं दीर्घम् सुरङ्गकम् ।
अश्वनद्या स्तट-प्रान्तं
स्पृशदासीन्मनो हरम् ॥ १ ॥

अन्तः पुर सुरक्षार्थम्
नृपैः पूर्वैश्च कारितम् ।
अज्ञातं केन चित्पुंसा
धात्र्यैव परिवीक्षितम् ॥ २ ॥

आवृतञ्च कपाटाभ्याम्
विशालाभ्याञ्च तन्मुखम् ।
भ्रमोत्पादन शीलाभ्याम्
सुदृढाभ्याञ्च सर्वदा ॥ ३ ॥

धात्री निवेदयामास
कुमार्यै वचनं हितम् ।
मार्जनं लोक निन्दायाः
सर्वथा सुविचारितम् ॥ ४ ॥

आनयामि शुभां भद्रे !
मञ्जूषां काष्ट निर्मिताम् ।
ऊर्ध्वम् सच्छिद्र-संयुक्तां
शिशोश्चाऽपि सुख प्रदाम् ॥ ५ ॥

तेजस्विनमिमं बालम्
विक्रान्तं सूर्य सन्निभम् ।
कवचेनाऽपि संयुक्तं
कुण्डलाभ्याम् विराजितम् ।। ६ ।।

स्वीयेन राज वस्त्रेण
कृत्वा शीघ्रं सुवेष्टितम् ।
निधेहि पेटिका मध्ये
हृदं कृत्वा दृढं शुभे ।। ७ ।।

पवित्रञ्च चरित्रन्ते
लाञ्छितं न भविष्यति ।
वृत्तान्तञ्च नरैः कैश्चित्
विज्ञातं न भविष्यति ।। ८ ।।

वालं सुरक्षितं विद्धि
सहस्र-कर-रक्षितम् ।
दिनैः कतिपयै रेव
जानीहि परिवर्द्धितम् ।। ६ ।।

अल्पै रेव दिनैः कुन्ति !
हास्याह्लाद सुशोभितम् ।
बालकस्याऽस्य दिव्यस्य
मुखेन्दुं परिद्रक्ष्यसि ।। १० ।।

अयं हि भविता पुत्रि !
दिग्विजेता न संशयः ।
महादानी महायोद्धा
सर्व राजन्य पूजितः ।। ११ ।।

श्रुत्वैतद् वचनं तस्याः
किञ्चित् खिन्ना नृपात्मजा ।
तामुवाच शनै र्धात्रीम्
सर्वकाल हितैषिणीम् ॥ १२ ॥

शोभनोऽयं परामर्श -
स्त्वदीयश्च प्रतीयते ।
पूर्व मप्येव मुक्ताऽस्मि
भानुना तीव्रभानुना ॥ १३ ॥

किन्त्वार्ये ! पुत्र विश्लेष
दुःखेनाऽस्म्यतिविह्वला ।
इतोऽप्यधिकमुद्विग्ना
भाविन्या लोक निन्दया ॥ १४ ॥

वस्तु-स्थिति न जानीते
लोकोमिथ्या प्रचारकः ।
किमसत्यञ्च सत्यञ्च
कदाऽपि न च पश्यति ॥ १५ ॥

अत्र सत्यमसत्यञ्चाऽसत्यं
सत्यं प्रजायते ।
कर्णाज्जन्मनि बालस्य
कथं विश्वस्यते नरैः ॥ १६ ॥

जगज् जनन्याः सीतायाः
अपि सांसारिकैः जनैः ।
अग्नि शुद्धि-युतायाश्च
पातिव्रत्यम् विशङ्कितम् ॥ १७ ॥

कथं कुर्यां यदोर्वंशं
निर्दोषाऽपि कलङ्कितम् ।
कथं कुर्याम् हि संसारे
पित्रोंश्च मस्तकं नतम् ।। १८ ।।

लोकोऽयम् तत्त्व विज्ञाने
प्रज्ञा-शून्यः प्रतीयते ।
मिथ्याऽपवाद-विस्तारे
निर्मर्यादश्च दृश्यते ।। १९ ।।

नरः स्वयं पथो भ्रष्टः
तथाऽन्यमपि पश्यति ।
पीत-रोग परीताक्षः
सर्वम् पीतं हि पश्यति ।। २० ।।

यः सहस्र करैर्लोकम्
परिपात्यचरं चरम् ।
रक्षिताऽस्याऽपि बालस्य
स्वस्य सो भगवान् रविः ।। २१ ।।

आयुःकीर्तिम् जयं युद्धे
शस्त्राऽस्त्रेष्वति कौशलम् ।
बलं विद्याञ्च लक्ष्मीञ्च
प्रदद्याद् भगवान् रविः ।। २२ ।।

दारिद्र्य-द्राविणीं लोके
सर्वोत्तर वदान्यताम् ।
देव विष्मापकं शौर्यम्
प्रदद्याद् भगवान् रविः ।। २३ ।।

एकेनैव महाशक्तिम्
सर्वं दिक्चक्र-जित्वरीम् ।
महारथित्वं मूर्द्धन्यम्
प्रदद्याद् भगवान् रविः ॥ २४ ॥

पृथिव्याः राजराजत्वम्
अभेद्यत्वं तथा त्वचः ।
सर्वस्वं वीरतायाश्च
प्रदत्तां भगवान् रविः ॥ २५ ॥

इति द्युमणिमाशास्य
आशिषः सकलाः शिशोः ।
धात्रीम् प्रवर्तयामास
मञ्जूषाऽऽनयने द्रुतम् ॥ २६ ॥

आनीतायां तया तस्यां
सर्वाऽवयव सुन्दरम् ।
सुवर्णं कवचोत्तंसं
कुण्डलाभ्यां लसन्मुखम् ॥ २७ ॥

सौर-तेजः समायुक्तं
विकसन्नयनाम्बुजम् ।
मातुरुत्सङ्गमारूढं
हेमकेशं हसन्मुखम् ॥ २८ ॥

पिबन्तं जननी स्तन्यं
पीनमानन्द वर्द्धनम् ।
मध्ये मध्ये च विश्रम्य
पश्यन्तं जननी मुखम् ॥ २९ ॥

चुम्बितञ्च प्रहर्षन्त्या
मात्रा वात्सल्य-युक्तया ।
लालितं स्वकराब्जाभ्या
ममन्दाऽऽनन्द मूढया ॥ ३० ॥

तेजस्विनं शिशुं कुन्ती
भविष्णूद्दाम वर्चस्वम् ।
दुकूलेन स्वकीयेन
महार्हेणश्ववेष्टयत् ॥ ३१ ॥

पेटिकायाञ्च तं वालं
स्वापयामास दुःखिता ।
सुरक्षयाऽऽवृतां कृत्वा
विललाप कृशस्वरम् ॥ ३२ ॥

धात्री तां सान्त्वयामास
विलपन्तीं नृपात्मजाम् ।
मा रोदीः दिव्यचारित्र्ये !
पुत्रि ! मा भव दुःखिता ॥ ३३ ॥

साहाय्यमाचरिष्यामि
दुःखेषु सततं तव ।
त्वया सह गमिष्यामि
यत्र यत्र गमिष्यसि ॥ ३४ ॥

त्वाञ्च वार्द्धक्य पर्यन्तं
नैव त्यक्ष्यामि सुव्रते ॥
तव पुत्रस्य वृत्तान्तं
श्रावयिष्यामि तेऽनघे ! ॥ ३५ ॥

स्वल्पेषु वत्सरेष्वेव
पुत्रेण सङ्गमेष्यसि ।
मामनुत्वं समायाहि
विलम्बो माऽस्तु कश्चन ।। ३६ ।।

इत्युक्त्वा पेटिकां धृत्वा
कराभ्याञ्च चचाल सा ।
कुमार्यपि तया सार्द्धम्
जगाम च सुरङ्गके ।। ३७ ।।

जग्मतुस्ते तदा द्वेऽपि
अश्व नद्यास्तटे शुभे ।
उत्तरङ्गतरङ्गाढ्ये
महा मत्स्य-भयङ्करे ।। ३८ ।।

कृत्वा विसर्जनं तस्याः
पेटिकायाश्च ते तदा ।
स्वकीये एव भवने
समाजग्मतुरुच्चकैः ।। ३९ ।।

प्रातः काले नरेन्द्रेण,
महाराज्ञ्या, जनैरपि ।
न ज्ञातम् केनचिद् वृत्तम्
तदानीन्तन मद्भुतम् ।। ४० ।।

अश्वनद्यां विसृष्टा सा
मञ्जूषा वालकाञ्चिता ।
चर्मण्वत्यां जगामाऽऽशु
जलवेगेन वाहिता ।। ४१ ।।

ततोऽपि सा ययौ शीघ्रं
यमुनायां जलैः सह ।
प्रयागे सङ्गमं प्राप्य
चालिता यमुना करैः ॥ ४२ ॥

गङ्गा नदीमुपेयाय
निर्बाधम् शिशु-शोभिता ।
आन्दोलिता तरङ्गाऽग्रैः
प्रचलद्भिः स-विभ्रमम् ॥ ४३ ॥

देवनाद्यस्तरङ्गैश्च
लालितोऽयम् रवेः शिशुः ।
अङ्गदेशस्य सीमायाम्
निर्विघ्नम् तेजसा बभौ ॥ ४४ ॥

"चम्पापुरी" ति विख्याता
पर्यावरण-शोभिता ।
विविधा-सुविधा-पूर्णा
राजधानी तदा बभौ ॥ ४५ ॥

एतस्मिन् राज नगरे
ययातेर्वंशजो नृपः ।
धृतराष्ट्रस्य सन् मित्रः
सारथ्येऽतीव दीक्षितः ॥ ४६ ॥

नाम्ना "चाधिरथः" धन्वी
क्षात्र धर्म विशारदः ।
न्यवसद् राजनीतिज्ञः
"राधा"ऽऽसीत्तस्य च प्रिया ॥ ४७ ॥

पुत्रो वा नाऽपि पुत्रीवा
ऽभवत्तन्नव-यौवने ।
कदाचित्स्वपुरे तस्थौ
कदाचिद् "हस्तिनापुरे" ।। ४८ ।।

स बालः पेटिका-संस्थः
उपचम्पापुरं ययौ ।
गृहादधिरथ श्चाऽपि
भ्रमन् गङ्गातटं ययौ ।। ४९ ।।

तरन्तीं पेटिकां दृष्ट्वा
जल मध्यात्समानयत् ।
गृह-मध्ये समुद् घाट्य
राधायै चाप्यदर्शयत् ।। ५० ।।

अपश्यताञ्च तन्मध्ये
खेलन्तं कवचाऽन्वितम् ।
दुकूल परिवीताङ्गम्
कुण्डलाभ्यां लसन्मुखम् ।। ५१ ।।

उदितादित्य संकाशम्
हसन्नेत्राम्बुज द्वयम् ।
कराभ्यां तञ्च गृण्हन्ती
राधा स्तन्यमपाययत् ।। ५२ ।।

वात्सल्येन स्रवन्तीं तां
दुग्ध धारां स्तन द्वयात् ।
जननीमेव तां मत्वा
सः शिशु र्नितरां पपौ ।। ५३ ।।

इतः परं स दैवेन
पितृभ्यां परिपालितः ।
ववृधे शुक्ल पक्षीय
सुधाकर इव द्रुतम् ।। ५४ ।।

कुण्डल-प्रभयोद्दीप्त
केशान्तोद्भ्रान्त लोचनम् ।
रराजोदय संलग्न
राकेन्दुरिव तत्मुखम् ।। ५५ ।।

शिशुना मातृवत्ताच
सम्प्राप्ता भाग्य-वैभवात् ।
मात्रा च पुत्रवत्राऽपि
अन्योऽन्यानन्ददायिनी ।। ५६ ।।

भाग्योदयेन लभ्यन्ते
दुर्लभाः अपि सम्पदः ।
असम्भवानि कार्याणि
सम्भवानि भवन्ति हि ।। ५७ ।।

दैवे प्रसन्ने सिध्यन्ति
विना यत्नं मनोरथाः ।
उपतिष्ठन्ति दैवेन
प्रसन्नाः सर्व-सिद्धयः ।। ५८ ।।

क्व च सद्यः प्रसूर्बालः
क्व च नद्यां प्रवाहनम् ।
क्व पुत्राऽ दर्शनं स्वप्ने
क्व च दिव्या स-पुत्रता ।। ५९ ।।

ईश्वर-प्रेरितं दैवं
सुसाधयति जीवनम् ।
सर्वस्य सर्वथा सर्वम्
सर्वदैव च सर्वदम् ॥ ६० ॥

बाल्यचापल्य-सम्पृक्तै
र्वचनैरर्द्ध खण्डितैः ।
वर्द्धयामास चानन्दम्
पित्रोर्लालयतोर्भृशम् ॥ ६१ ॥

कदाचित्प्राङ्गणे रिंगन्
जानुभ्याञ्च शनैः शनैः ।
वर्द्धिताऽतुल वात्सल्यम्
हर्षयामास मातरम् ॥ ६२ ॥

तमुत्थान कृतोत्साहम्
अर्द्धे पतन शङ्कया ।
जनको धारयामास
तिष्ठन्तम् भवनाऽजिरे ॥ ६३ ॥

समासादित सम्पत्तिः
कौरवेन्द्र कृपास्पदम् ।
यत्नैरतीव सम्पन्नैः
पोषयामास तं रथी ॥ ६४ ॥

सुवस्त्रैः सदलङ्कारैः
भोजनैरमृतोपमैः ।
लालनैः पालनैः राधा
वर्द्धयामास बालकम् ॥ ६५ ॥

गृहीतः स्वयमुत्सङ्गे
परिवार-जनैः स्वकैः ।
द्विदन्तीं दर्शयन् प्रेम्णा
सर्वानानन्दयत् हसन् ।। ६६ ।।

कुण्डलोल्लास संकीर्णैः
चञ्चलैः काक-पक्षकैः ।
असम्पूर्ण वचोभिश्च
स बालः सुतरां बभौ ।। ६७ ।।

कदाचिच्च पितुः पार्श्वे
कदाचिन्मातृ सन्निधौ ।
गताऽऽगतं चकाराऽसौ
पादावुत्थापयन् शनैः ।। ६८ ।।

किंकिणी-दाम संलग्नाः
नूपुरो परिसंयुताः ।
शब्दयन्तश्च मणयः
शोभयामासुरर्भकम् ।। ६९ ।।

गुरुभिः कृत संस्कारः
वेदविद्या विशारदैः ।
अग्न्युत्तार-चमत्कुर्वत्-
सुवर्ण-मणिवद् बभौ ।। ७० ।।

वर्णमाला सदभ्यासात्
शुद्धोच्चारण कौशलैः ।
भृशं विस्माययामास
स्वकीयान् पाठकानपि ।। ७१ ।।

स: स्वल्पेनैव कालेन
सर्व-विद्यासु चातुरीम् ।
कलासु चैव नैपुण्यम्
प्राप्नोद् गुर्वनुकम्पया ।। ७२ ।।

।। कर्ण-सुरक्षणन्नाम द्वितीयः सर्गः समाप्तः ।।

---

॥ श्रीः ॥

# विहरणन्नाम तृतीयः सर्गः

अधिरथेन रथेन च नित्यशः ।
समुपजात परिभ्रम कौतुकः ॥
नववयाः वयसाञ्च कुलैर्युते ।
सुर-सरिद्विलसत्पुलिने ययौ ॥ १ ॥

नव शिशुः शिशुकेलि कुतूहली ।
वयसि चाऽपि समैः शिशुभिः समम् ॥
सुविजहार विहार सुशोभिते ।
उपवने हरित-द्रुम संकुले ॥ २ ॥

नगरवासि जनाः समबोधयन् ।
कनक कुण्डल कान्ति विभाविताः ॥
अखिल बालक वृन्दवरैरमुं ।
अतुलितं खलु "कर्ण" इति प्रभम् ॥ ३ ॥

स्वनगरी नवनन्दन चन्दनम् ।
प्रतिदिनञ्च दिवाकर वन्दनम् ॥
ददृशुरेनमति प्रभयाऽऽनताः ।
अधिरथस्य नवं प्रिय नन्दनम् ॥ ४ ॥

सकल-शस्य-वयस्य-गणैः समम् ।
सपदि खेल कलाश्च समभ्यसत् ॥
सहज बुद्धि बलैः परिभाविताः ।
प्रसभमन्वसरन् प्रबलाः अपि ॥ ५ ॥

कवचमञ्चितमस्य च काञ्चनं ।
सुदृढमस्य शरीरमुदञ्चयत् ।।
यदभिवीक्ष्य जनाः सकलाः अपि ।
जगुरिमं 'वसुसेन' इति स्वयम् ।। ६ ।।

निखिल शास्त्र कलाप विगाहिनीम् ।
प्रखरतां प्रथमां समुपेयुषीम् ।।
अनितर प्रतिमां प्रतिभां वसोः ।
समभिवीक्ष्य नृपं परिचक्रिरे ।। ७ ।।

अतितरां खलु कर्णपरायणा ।
प्रति दिनं सुत-सौख्य विभाविनी ।।
निज पति-प्रणय व्रत पालनी ।
"अधिरथी" सुषुवेऽप्यपरं सुतम् ।। ८ ।।

अथ निजाग्रजवत् सुतरां बभौ ।
कवच कुण्डल भव्य विभां विना ।।
समुपपादित सर्व सुसंस्कृतिः ।
खलु "रिपुञ्जय" इत्यभिधां दधौ ।। ९ ।।

अनुससार गुणेषु निजाग्रजम् ।
अनुजगाम विहर्तुमसौ वने ।।
नव रथासन-भोजन-केलिषु ।
न च जहौ वसुसेनमसौ शिशुः ।। १० ।।

सपदि कौरव-राजनिमन्त्रितो ।
गृह भरं विनिधाय सुतोपरि ।।
किमपि कार्यमसौ परिचिन्तयन् ।
अधिरथोऽपि ययौ गजसाह्वयम् ।। ११ ।।

अनुदिनं दधतुश्च तदन्तरम् ।
मृग खगेन्द्र वराह विहिन्सनैः ॥
विविध-वाजि-युतौ मृगया-रतौ ।
हत गजेन्द्र-मृगेन्द्र-विडम्बनम् ॥ १२ ॥

अति समुद्यत दुष्ट वृषं वसुः ।
जन विनाशनमेकतमे दिने ॥
सुपरिगृह्य भयङ्कर शृंगयोः ।
सविनिपातमनाथमनाथयत् ॥ १३ ॥

वसन-वासन-भोजन पीडिताः ।
कलितनिर्धनतः-नगरो जनाः ॥
सकल वाञ्छित वस्तु समर्पणैः ।
विविध भोग-युताः सुखिनः कृताः ॥ १४ ॥

अपि समस्त जनाः नत मस्तकाः ।
परिदधुर्मनसाऽस्य सुशासनम् ॥
समुदयन्तमयं तपताम्पतिम् ।
परिचचार समास्य कुशाऽसनम् ॥ १५ ॥

विविध वाजिरथैः शर-कार्मुकैः ।
सह गृहीतविभूतिरुपा ययौ ॥
अधिरथोऽपि च नून-महारथः ।
उदित भाग्य सुपूर्ण मनोरथः ॥ १६ ॥

सु-ललितौ नव यौवन चुम्बितौ ।
पर पराभवि विक्रम संयुतौ ॥
किल समाददतुः पितुरन्तिकात् ।
बहुविधांश्च शरानथ कार्मुके ॥ १७ ॥

स्व-पितुरेव निदेशन-संस्थितः ।
प्रथममाशु धनुर्धरतां दधौ ।।
तदनुसाधितवान् गुण-बन्धनाम् ।
पुनरसौ विशिखान् खलु सन्दधौ ।। १८ ।।

अनुदिनं निजलक्ष्य-नियातने ।
सफलतां ययतुश्च शनैः शनैः ।।
अति जवेन च वाजि-विधावने ।
अपि कलां सकलाञ्च समीयतुः ।। १९ ।।

रथगतेर्विदिताः विविधाः विधाः ।
सरल-वक्र-विवर्तितं-वर्त्मसु ।।
अविरलं प्रतिमल्ल-विजित्वरी ।
अधिगताऽखिल दाव गणावली ।। २० ।।

इयति, भोज सुताऽपि विवाहिता ।
सह दिशांजयिना खलु पाण्डुना ।।
तदनु मद्रनृपाऽत्मजया सह ।
स च पृथाऽनुमतः करमग्रहीत् ।। २१ ।।

स्व-सदनान्महिषीद्वय संयुतः ।
स खलु पाण्डुनृपो विपिनं गतः ।।
विधिबलान्मुनि शाप वशं गतः ।
कुलकलाङ्कुरणेऽक्षमतां दधौ ।। २२ ।।

विदितवृत्त समाकुलिता पृथा ।
प्रबल मन्त्रबलेन महासती ।।
शम-युता यम-वायु-सुरेश्वरान् ।
अनु जुहाव च सन्ततमश्विनौ ।। २३ ।।

समगमत्खलु माद्रिकया समम् ।
सुरवरैः सह शूर-सुता मुदा ।।
अलभत प्रबलांस्तनयान् तदा ।
सकल पूर्वतमञ्च युधिष्ठिरम् ।। २४ ।।

तदनुभीम मथार्जुनसंज्ञकम् ।
तदनु मद्र-सुता नकुलं परम् ।।
गुण युतं सुषुवे सहदेव कम् ।
इति विचित्र बलाः खलु पाण्डवाः ।। २५ ।।

कतिपयैर्दिवसैश्च दिवंगते ।
प्रथितपाण्डु नृपे च समाद्रिके ।।
ननु पृथाऽपि च पञ्च-सुतैः समम् ।
प्रति ययौ नगरीं खलु कौरवीम् ।। २६ ।।

वन-निवास रतैर्मुनिभिः समम् ।
सह सुतैरपि धात्रिकया च सा ।।
स्व तनयान् सुतरां परिपालितुम् ।
प्रति विवेश नरेन्द्र-निकेतनम् ।। २७ ।।

अखिल वृत्त-कुल-श्रवणान्तरं ।
अनुभवन् कटु दुःखसुखे तदा ।।
सकल पाण्डु सुतान् परिलालयन् ।
प्रियमुवाच च कुन्ति-सुतामपि ।। २८ ।।

मनसि पुत्रि ! सुधारय धीरतां ।
सकल राज्यमिदञ्च तवैव हि ।।
मम यथा तनयाः हृदय-प्रियाः ।
खलु तथैव च पाण्डु-सुताः इमे ।। २९ ।।

तदनु सा धृतराष्ट्र-नरेश्वरी ।
सपदि भोज-सुतां स-सुतां दधौ ।।
सदसि भूमि भुजां खलु शृण्वताम् ।
स-शपथं "नृप-मातृ"-पदं ददौ ।। ३० ।।

इति समेकित पञ्च-शताः अपि ।
बहुमताः नृप-राजकुमारकाः ।।
विदधिरे स्व विहार कुतू हलैः ।
कुसुमितां सुषमां नृप-सद्मनः ।। ३१ ।।

अथ धनुर्धर वर्ग धुरन्धरः ।
सु महितः खलु भीष्म पितामहः ।।
शिशु-सुशिक्षण-दीक्षण-सुप्रियः ।
विहितवान् निखिलास्त्र-सुशिक्षणम् ।। ३२ ।।

कृत कृपश्च "कृपः" स "कृपीपतिः" ।
खलु कुमार-कलापमशिक्षयत् ।।
पवन-पुत्र-पराक्रम वीक्षणात् ।
मनसि रूढ-भयाः शत-कौरवाः ।। ३३ ।।

गरल सम्भृत मोदक दानतः ।
बहु-विधाश्च चकार सुयोधनः ।।
अति भयङ्कर "भीम" विनाशने ।
उदपतत् सहसा कलहाङ्कुरः ।। ३४ ।।

अधिरथोऽपि रथेन गजाह्वयम् ।
नृप-निदेशनतो वसुना समम् ।।
अनुसरन्तमुपास्य रिपुञ्जयम् ।
अपि ययौ नर-नार्यवलोकितः ।। ३५ ।।

सह नयन् किल कर्ण-रिपुञ्जयौ ।
रथ-सुधावन लज्जित मातलिः ।।
अभिययौ धृतराष्ट्र-सुरक्षितम् ।
ध्वज विचुम्बितखं भवनोत्तमम् ।। ३६ ।।

प्रणति नम्र करौ तनयौ स्वकौ ।
अधिरथश्च चकार पुरःस्थितौ ।।
अथननाम स-नाम-निदेशनम् ।
कुरुपतिम् सुकलत्र-समन्वितम् ।। ३७ ।।

तौ द्वावपि स्वस्तिमतां त्रपाणाम् ।
समागतानाम् कुशलं सुदूरात् ।।
निदेशयामासतुरन्तिक स्थान् ।
भृत्यान् व्यवस्थामुपचार-युक्ताम् ।। ३८ ।।

आज्ञापयामास च युद्धशाला- ।
ध्यक्षान् प्रवेशार्थमथास्य शिश्वोः ।।
शस्त्रास्त्र योगानुपयोग काले ।
स्वतन्त्रताञ्चाप्यनयोः स-हर्षम् ।। ३९ ।।

समीक्षतां कौरव-पाण्डवानाम् ।
कर्णस्य कर्णौ चल कुण्डलाभ्याम् ।।
संशोभितौ तत्कवचञ्च तस्य ।
त्रस्तानि चित्तानि भृशं बभूवुः ।। ४० ।।

।। कर्ण विहरणन्नाम तृतीयः सर्गः समाप्तः ।।

---

॥ श्रीः ॥

# स्वाध्यायोनाम चतुर्थः सर्गः

अथाऽन्वपश्यद् युवराट् कुरूणाम् ।
तेजस्विताञ्चास्य परां शुभास्ये ॥
धनुर्धरत्वम् परिसन्दधाने ।
स-कुण्डलेऽ कुण्डलितां दधाने ॥ १ ॥

तदन्तरं स्वं द्विषतां नृपाणाम् ।
महारथानामपि सूदितारम् ॥
प्रघर्षितारं सम-पाण्डवानाम् ।
सुयोधनः सम्यगिमं ददर्श ॥ २ ॥

अपृच्छदेवाऽधिरथं तथाऽसौ ।
"पितृव्य ! कोऽयम् भवता सहेति ॥
विज्ञात तत्सर्वं कथश्च तस्मात् ।
प्राणैः समानेन ननन्द तेन ॥ ३ ॥

विहार भोज्याऽसन वस्त्र भूषा ।
गजाऽश्व यानेषु समादृतः सः ॥
कर्णोऽपि कर्णान्ति विलोचनश्रीः ।
जगाम शस्त्राऽस्त्र-नियोगशालाम् ॥ ४ ॥

व्रजन्तमेनं सहसा ददर्श ।
धात्री-समेता नृप-सद्म मध्ये ॥
गवाक्ष मार्गात् खलु सैव कुन्ती ।
मुदाऽभिजज्ञौ सह कुण्डलाभ्याम् ॥ ५ ॥

तामुच्चलन्तीं स्नुतदुग्धधाराम् ।
परिग्रहीतुं ग्रहराजपुत्रम् ।।
"पुत्रेति कर्णेति" शनैर्वदन्तीम् ।
निवारयामास करेण धात्री ।। ६ ।।

रिपुञ्जयेनाऽनुगतस्तथाऽसौ ।
व्यायाम-शालां प्रविवेश पूर्वम् ।।
अधिष्ठितां द्रोण-धनुर्विदा ताम् ।
राजन्य-पुत्रैककृतप्रवेशाम् ।। ७ ।।

द्रोणं तदाचार्यं वरं ननाम ।
तच्छिष्यतां प्राप्तुमसौ भविष्णुः ।।
तम् सूर्यपुत्रम् कृत सूत-पुत्रम् ।
नापश्यदाविष्ट-गुरु नृंपाणाम् ।। ८ ।।

कर्णः परित्यज्य नृपार्भकाणाम् ।
प्रशिक्षितारं भुवि केवलानाम् ।।
विष्मापनं तत्प्रिय शिष्य बुद्धेः ।
धनुःशराभ्यासमसौ चकार ।। ९ ।।

धनु र्गजाऽश्वादि रथादिकेषु ।
गदा स्वनेकेषु वरायुधेषु ।।
खड्गादि योगेषु कृताऽभ्यनुज्ञः ।
सः साऽनुजोऽभ्यस्ततरो बभूव ।। १० ।।

सर्वेऽपि पाण्डोस्तनयास्तदैनम् ।
पश्यन्त आश्चर्य युताः बभूवुः ।।
शत्रुञ्जयेनाऽनुगतम् तदानीम् ।
शरासनञ्चाऽपि शरान् दधानम् ।। ११ ।।

युधिष्ठिरः सु-स्थिर मानसः सः ।
पादाङ्गुलीः स-प्रसरं ददर्श ॥
समाः पृथायाश्च पदाङ्गुलीभिः ।
सुकोमलाभिश्च सुवर्तुलाभिः ॥ १२ ॥

तदन्तरं वायु-सुतोऽप्यपश्यत् ।
साऽऽश्चर्यमस्याऽतुलपौरुषस्य ॥
वक्षस् स्थलोत्सेध विराजमानौ ।
भुजौ भुजङ्गाविव पञ्चशीर्षौ ॥ १३ ॥

अथाऽर्जुनोऽप्यस्य मुखं ददर्श ।
विद्योतितं कुण्डल मण्डलाभ्याम् ॥
शुक्लाष्टमी-चन्द्र-विशाल भालम् ।
विचित्र तेजो वलयं दधानम् ॥ १४ ॥

क्रमाऽनुसारं नकुलोऽप्यपश्यत् ।
सन्दिग्धमेनं न-कुलं तदानीम् ॥
व्यायाम-शालां परिभूषयन्तम् ।
द्यु-देव पुत्रं सहदेव-युक्तः ॥ १५ ॥

तेनाऽर्जुनः किञ्चन भाषणेच्छुः ।
शनैः समीपं सहसाऽऽजगाम ॥
समापतत् तत्क्षणमेव मध्ये ।
द्वयोस्तदानीम् खलु कृष्ण-सर्पः ॥ १६ ॥

द्रोणोऽपि पश्यन् खलु वृत्तमेनम् ।
निर्धारयामास च दुर्भविष्यम् ॥
अन्ये च ते राजकुमार वर्याः ।
सर्पे विलीने चकिताः इवासन् ॥ १७ ॥

द्रोणि स्तदानीम् वयसा समानम् ।
तेजस्वितायामधिकं स-मानम् ।।
प्रभावितः श्रेष्ठगुणैस्तदास्य ।
मित्राग्रणीम् मित्र-सुतं चकार ।। १८ ।।

सा युद्धशाला शुशुभे कुरूणाम् ।
विभिन्नदिग् राजकुमार-पूर्णा ।।
नानास्वरूपैर्मृगराज-शावैः ।
विन्ध्याऽटवीव प्रबलैः प्रपूर्णा ।। १६ ।।

एवम् स्वकीयं तनयं प्रपश्यन् ।
सुरक्षितं तं परितुष्ट-चेताः ।।
करैर्विचुम्बन्नलिनीं स्वकान्ताम् ।
बभूव भास्वाँश्च दिगन्त वन्धुः ।। २० ।।

प्रशिक्षणे प्रातरसौ प्रवृत्तः ।
द्रोणोऽपि राजन्य कुमारकाणाम् ।।
किञ्चार्जुनं सर्वधनुर्धराणाम् ।
मूर्ध्दन्यतां प्रापयितुं प्रयत्नात् ।। २१ ।।

तमेकलव्ये व्यवहार दुष्टम् ।
हित्वाऽङ्गपाते प्रथितं पृथिव्याम् ।।
सर्वज्ञमेव स्वगुरुं चिकीर्षुः ।
ननाम मूर्ध्नाऽऽशु गुरुं ग्रहाणाम् ।। २२ ।।

कृताऽनुकम्पो गुरुणा तथाऽसौ ।
मञ्चं समारुह्य गृहीत-धन्वा ।।
समं विकर्षन् सहपाठिनेत्रैः ।
गुणं कठोरं गुणिनोऽस्य, रेजे ।। २३ ।।

तत्राऽऽशुगं चाश्वपि सन्दधानः ।
विवेध लक्ष्यं किल लाघवेन ॥
दृष्ट्वा न तं केवलमर्जुनाद्याः ।
द्रोणः पराऽऽश्चर्य-परो बभूव ॥ २४ ॥

एवम् सदभ्यास युतां तपस्यां ।
नित्यम् प्रकुर्वन् विविधैः प्रयोगैः ॥
धनुर्धरोऽधीतवतां समूहे ।
"कुमार" इत्येव परैः समूहे ॥ २५ ॥

तदन्तरं जिह्मशर-प्रयोगे ।
अवाप्तवान् विस्तृत कौशलानि ॥
चलद् भ्रमल् लक्ष्य निपातनेषु ।
उत्कर्षमिच्छन् सफली कृतेषुः ॥ २६ ॥

परोक्ष-दूर-ध्वनि वेधिबाण ।
प्रयोग संकल्पित भूरि वर्षम् ॥
असौ धनुर्वेद-विधां विवित्सुः ।
साफल्यलाभेन वभार हर्षम् ॥ २७ ॥

तमर्ध्दचन्द्राकृति दिव्य भालम् ।
सर्वेऽपि ते छात्र गणाः ह्यपश्यन् ॥
शरान् क्षिपन्तं निशितार्द्धचन्द्रान् ।
द्विषच्छिरच्छेद करानमन्दान् ॥ २८ ॥

स कुण्डली भूत धनुर्दधानः ।
प्रायुङ्क्त पूर्वम् युगपद् द्विवाणीम् ॥
अनन्तरम् दुर्दिन-बन्ध-दक्षान् ।
अमूमुचच्छीघ्रमनेक बाणान् ॥ २९ ॥

अथाऽकरोत् सूचिमुखाऽऽशुगानाम् ।
प्रक्षेपणं मत्स्यविभेदनाय ॥
समुत्पतत्पक्षि विलोचनानाम् ।
उत्क्षेपणेचाऽति लघुत्वमाप ॥ ३० ॥

गदा परिभ्रामण लब्ध कीर्तिः ।
लसद् भुजाऽऽभोग वपुर्बभासे ॥
चक्राऽसि शूलान् परिघानन्नल्पान् ।
सञ्चालयामास रणोपयुक्तान् ॥ ३१ ॥

मल्लोद् भटान् वज्र-समान देहान् ।
न्यपातयत्सो "भुजकण्टकेन" ॥
शीघ्रम् प्रतिस्पर्द्धि-गणे प्रभावम् ।
आरोपयामास विचित्र भावम् ॥ ३२ ॥

अश्व द्वयीपृष्ठधृत द्विपादः ।
स्वधावयत्तामतिवेग युक्ताम् ॥
चक्रेऽद्भुतम् चङ्क्रमणं रथानाम् ।
विभेदयामास घटाः गजानाम् ॥ ३३ ॥

एतेषु सर्वेष्वपि कौशलेषु ।
रिपुञ्जयं तं निपुणं चकार ॥
समुन्नतौ भ्रातृ जनस्य नित्यम् ।
दत्ताऽदराः श्रेष्ठजनाः भवन्ति ॥ ३४ ॥

दुर्दान्त भीमेन विमोटिताः याः ।
शिक्षालय द्वारकपाट लग्नाः ॥
अयः शलाकाः खलु ताः समस्ताः ।
पूर्वं यथाऽसौ सरलाश्चकार ॥ ३५ ॥

कौतूहलाऽऽक्रान्त मनाः परस्मिन् ।
दिने; च विज्ञात समस्त वृत्तः ।।
मेने स्वकस्मादधिकं बलेन ।
भीमोऽप्यमुं स्रस्तविपद् बलेन ।। ३६ ।।

दृष्ट्वा भ्रमन्तं खलु युद्धशाला- ।
प्रान्तेषु शस्त्रास्त्र विलोकनाय ।।
न द्रोण-शिष्याश्चकिताः बभूवुः ।
द्रोणः कृपश्चाऽप्यति विस्मतोऽभूत् ।। ३७ ।।

द्रोणस्तमन्ते वसतां समाजे ।
सर्वाधिकं बुद्धि-बलादि दृष्ट्या ।।
शर-प्रयोगेऽप्यति लाघवेन ।
अमंस्त कर्णम् लसितास्यवर्णम् ।। ३८ ।।

द्रोण स्तथाऽपीतर शिष्यवर्गात् ।
तमर्जुनं केवल मुन्निनीषुः ।।
स्वभाव दोषात् कृत पक्षपातः ।
कृत प्रशंसो भृशमर्जुनेऽभूत् ।। ३९ ।।

विज्ञाय चैतच्च सुयोधनाद्याः ।
जाताऽनुतापाः धृतराष्ट्र-पुत्राः ।।
गुरौ गुरुत्वादपसर्पणेन ।
अतुष्टचित्ताः सुतरां बभूवुः ।। ४० ।।

सर्वेऽपि ते भूतलराजपुत्राः ।
सुशिक्षिताः स्वेविषये बभूवुः ।।
प्रज्ञा-मनोयोग बलाऽनुसारम् ।
छात्राः विभिन्नोन्नतयो भवन्ति ।। ४१ ।।

पितामहः कौरव-पाण्डवानाम् ।
धनु र्विदाचार्य वरं बभाषे ॥
द्रोणं समाहूय समादरेण ।
औचित्य पूर्णां विदधत्सपर्याम् ॥ ४२ ॥

आचार्य ! किञ्चित्परिचाय्यतां सा ।
शस्त्रास्त्र शिक्षा सु विशाल शाला ॥
किंस्वित्कुमाराः दधते मनोज्ञाम् ।
धनुः शराणां विविधां प्रयुक्तिम् ॥ ४३ ॥

सञ्चालने ते परिनिष्ठिताः किम् ।
चक्राऽसि शूलास्त्रभृतो गदानाम् ॥
किम् व्यूह-भेदाः परिशिक्षिताः वा? ।
अक्षौहिणी-सङ्क्रमण-प्रसङ्गे ॥ ४४ ॥

ओमित्युवाचाऽऽशु गुरुः सहर्षम् ।
अवाप्य तम् शान्तनवीय-वृत्तम् ॥
समायुयोजाऽप्रतिमां सुकाले ।
स्पर्द्धाम् पटुच्छात्र परीक्षणाय ॥ ४५ ॥

प्रारम्भ कालात्प्रथमे दिनेऽसौ ।
व्यधत्त सर्वैः सह रुद्र-यागम् ॥
बलि-प्रदानाय सुमङ्गलेऽस्मिन् ।
दिदेश सिंहाऽऽनयने स्व-शिष्यान् ॥ ४६ ॥

भीमाऽर्जुनाद्याः अपि तत्सुशिष्याः ।
परस्परोद्वीक्षण मौनमासुः ॥
व्याघ्रम् समानेतुमहाऽध्वरेऽस्मिन् ।
न कोऽप्यशक्नोन्मनसि प्रभीतः ॥ ४७ ॥

पश्यन् समेषाञ्च विचित्र नाट्यम् ।
कर्णः स्वहस्तेन गृहीतधन्वा ॥
ययौ महारुद्र-समर्चनाय ।
प्राप्तुं मृगेन्द्रं गिरि कन्दराभ्यः ॥ ४८ ॥

प्रत्यञ्चया वद्धमुखं मृगेन्द्रम् ।
प्रत्याययौ शीघ्रमसौ ग्रहीत्वा ॥
उपाहरत्पाशुपतं तमाशु ।
पशुं पशूनाम्पतये स-हर्षम् ॥ ४९ ॥

द्रोणश्च सर्वेऽपि च तस्य शिष्याः ।
तमर्जुनाद्याश्च पितामहश्च ॥
सर्वे भयाऽऽश्चर्य-युताः प्रशंसुः ।
बभौ समुद्दीपित कुण्डलांशुः ॥ ५० ॥

॥ कर्ण-स्वाध्यायोनाम चतुर्थः सर्गः समाप्तः ॥

---

॥ श्रीः ॥

# प्रातिद्वन्द्विकं नाम पञ्चमः सर्गः

अथाऽपरेद्युर्द्युसदां वरीष्ठान् ।
प्रत्यर्च्य सम्यक् गमयाम्बभूव ॥
नाना विधिज्ञान् खलु शिल्पिवर्गान् ।
"रङ्ग-स्थलं" सज्जयितुं स भीष्मः ॥ १ ॥

नितान्तमन्तःपुर सञ्चरीणाम् ।
विलासिनीनामुपवेशनाय ॥
दीर्घाऽन्वितो मञ्च वितान शोभी ।
महापताकः शुशुभे स्थलः सः ॥ २ ॥

स्पर्द्धोत्सवं द्रष्टुमनेकदेश- ।
प्रशासकान् वीरवरान् नरेन्द्रान् ॥
शस्त्राऽस्त्र-विज्ञान् सकलानभिज्ञान् ।
आमन्त्रयामास पितामहोऽयम् ॥ ३ ॥

अध्यक्षयिष्यन् स्वयमेव यत्नात् ।
सिंहासनस्थे कुरुराज्य राजे ॥
द्रोणः कृपश्चाऽपि सु-निर्णयस्थौ ।
संयोजयामास महोत्सवं तम् ॥ ४ ॥

अथागताः द्रष्टुमिमं नरेन्द्राः ।
स्वीचक्रुरुच्चानि वरासनानि ॥
कुन्ती-समेताः अपि राजदाराः ।
दीर्घासु नेपथ्य-समन्वितासु ॥ ५ ॥

भीमार्जुनाद्याः सकलाः कुमाराः ।
रण-प्रशिक्षा-भवनात्तदानीम् ॥
अस्त्राणि शस्त्राणि गदाश्च नीत्वा ।
तस्थुः स्वकीयेषु च मण्डलेषु ॥ ६ ॥

अराज पुत्रत्व-निरस्त नामा ।
द्रोणेन जातित्व हठास्पदेन ॥
वृत्ताऽनभिज्ञेन पुराण शास्त्रे ।
समाजगामाधिरथिर्न तस्मिन् ॥ ७ ॥

वसन्ति नो यद्यपि जातिवर्गे ।
एकान्ततः सर्व-गुणाः विशेषे ॥
नैवाधिकारश्च नृपाऽर्भकाणाम् ।
कोदण्ड दण्डोद्धरणे धरायाम् ॥ ८ ॥

ययाति वंशे परिपालितोऽपि ।
परन्तपोऽयं तपनस्य सूनुः ॥
अभेद्यचर्माऽखिल सद्वरिष्ठः ।
आसीद् धनुर्बाणभृतां विशिष्ठः ॥ ९ ॥

तथाऽप्यमुस्मिन् निज पक्षपाती ।
एकार्जुनं श्रेष्ठतमं विधित्सुः ॥
उपेक्षयन् तं निखिलासु दिक्षु ।
द्रोणोऽप्यभूद् भ्रान्ति-विनष्ट चक्षुः ॥ १० ॥

न केवलं चाऽस्य वपुर्विशेषे ।
सौन्दर्य-सौजन्य-गुणः सु-शब्दम् ॥
कर्णेष्वपि प्रौढ धनुर्धराणाम् ।
धनुर्गुणश्चाऽपि चकार शब्दम् ॥ ११ ॥

स्थितेषु सर्वेषु निजासनेषु ।
पदाधिकारि-प्रवरेषु तत्र ।।
उद्देश्यमावेदयितुं सभायाः ।
समुत्थितः शान्तनवः स-शान्ति ।। १२ ।।

सर्वेषु युष्मास्वतिशिक्षितेषु ।
शस्त्रादि कौशल्य कलाञ्च योऽपि ।।
प्रदर्शयिष्यत्यति लाघवेन ।
सर्वोत्तमः सोऽयमिदं; जगाद ।। १३ ।।

श्रुत्वैव ते शान्तनवीय-वाचम् ।
विप्रेषु वेदोच्चरणे रतेषु ।।
तूर्येषु हर्षेण सु-शब्दि तेषु ।
शङ्खेष्वनेकेषु च वादितेषु ।। १४ ।।

नृत्याऽङ्गनानां चरणाञ्चितेषु ।
रणत्सु मन्दम् मधु नूपुरेषु ।।
द्रोणस्य शिष्याः नर देव-पुत्राः ।
स्पर्द्धा-सभायां विविशुस्तदानीम् ।। १५ ।।

प्रदर्शयामासुरिमे विशेषान् ।
स्व-स्वीकृतानां सततं कलानाम् ।।
चापेषु केचिच्च शरेषु केचित् ।
भल्लेषु केचिच्च गदासु केचित् ।। १६ ।।

गजेषु केचिच्च रथेषु केचित् ।
तुरङ्गमाणाम् प्रवरेषु केचित् ।।
वज्रेषु केचित् परिघेषु केचित् ।
महाऽसिवेग भ्रमणेषु केचित् ।। १७ ।।

तदन्तरं भीम वपुः स भीमः ।
गदां गृहीत्वा भुजगेन्द्र कल्पाम् ॥
बहु प्रकारैश्च महाभुजाभ्याम् ।
विभ्रामयामास समुद्धताभ्याम् ॥ १८ ॥

दृष्ट्वाऽद्भुतं ते खलु दर्शका स्तत् ।
क्षणं महाभीति-युताः बभूवुः ॥
पुनश्च साश्चर्यमपश्यनेनम् ।
विस्फारिताभ्यां नयनाञ्चलाभ्याम् ॥ १९ ॥

सुयोधनस्तस्य विपक्षिभूतः ।
प्रदर्शयामास गदा-प्रहारान् ॥
कुर्वन् विचित्राणि च मण्डलानि ।
रिपोः प्रहार-क्रम-वञ्चकानि ॥ २० ॥

उद्घोषितौ तुल्यबल प्रमाणौ ।
द्रोणेन तौ वज्र समान देहौ ॥
सुयोधनो युद्ध कला विशिष्टः ।
भीमोऽप्ययम् देह-बले विशिष्टः ॥ २१ ॥

अथाऽर्जुनः प्राऽवतरन्महीयान् ।
द्रोणस्य शिष्येषु नृपात्मजेषु ॥
स्पर्द्धा-सभायाम् प्रसरद्विभायाम् ।
तूणीर-कोदण्ड विमण्डिताङ्गः ॥ २२ ॥

प्रदर्शयामास कलाः समग्राः ।
विशिष्ट वाणाऽसि शरासनानाम् ॥
शिष्यान्तरान्तः करणैरलभ्याः ।
द्रोणैकसेवाकरणेन लभ्याः ॥ २३ ॥

तथा ह्यसौ शत्रु-विनाशनानि ।
विमण्डलान्यारचयाञ्चकार ॥
एकेन बाणेन च बाण पूगम् ।
निःसारयामास तथोग्रवर्षम् ॥ २४ ॥

पुनः शराणां विविधैः प्रयोगैः ।
निरोधनायाऽपर सैनिकानाम् ॥
प्राकार भित्ति रचयाञ्चकार ।
क्षमां विशालां परिपन्थि-रोधे ॥ २५ ॥

बिभेद मत्स्यं भ्रमितेऽपि यन्त्रे ।
छायां विलोक्यैव शरान्तरेण ॥
कदा तु पारं गमितुं नदीनाम् ।
सेतुं बबन्धाऽऽशु शरैर्विशालम् ॥ २६ ॥

इत्थं प्रयोगैरमरेन्द्र-सूनोः ।
भीष्मादयो वीरवराः जहर्षुः ॥
विलोक्य पार्थस्य समुन्नतिताम् ।
आनन्द-मग्ना निजसूः पृथा च ॥ २७ ॥

गुरुः स्वशिष्यप्रवरं समीक्ष्य ।
सर्वाऽतिगा मुन्नतिमादधानम् ॥
अति प्रसन्नो मनसि स्वकीये ।
कृतां प्रतिज्ञां सफलाञ्च मेने ॥ २८ ॥

उद्घोषितश्चाशु जयोऽर्जुनस्य ।
मध्ये तदा सर्व धनुर्धराणाम् ॥
कृपश्च नीलामरविन्द-मालाम् ।
धृत्वा कराग्रेण समुत्थितोऽभूत् ॥ २९ ॥

समर्पितुं सोऽर्जुनकण्ठदेशे ।
मञ्चाऽऽभि मुख्येन चचाल यावत् ।।
तावत् श्रुती व्याकुलयन् समेषाम् ।
कोलाहलो द्रार्यभवत् सभायाः ।। ३० ।।

मूर्तिर्नवाऽलौकिक पौरुषस्य ।
प्रत्याकृतिर्वीररसस्य नव्या ।।
सद्व्याकृतिर्वज्रधनुः शराणाम् ।
काऽप्याकृतिस्तत्र सभां विवेश ।। ३१ ।।

किमेष साक्षाद् भगवान् विवस्वान् ।
वैश्वानरो वास्व-शरीर-युक्तः ।।
रामः स्वयं दाशरथिर्महात्मा ।
इत्थं विजज्ञे स जनैः सभास्थैः ।। ३२ ।।

क्षणान्तरं कुण्डल-रत्न-रश्मि- ।
चमत्कृतास्यो विहसन् सुमन्दम् ।।
आरुह्य मञ्चं कवचांशु-दीप्तः ।
एको युवोवाच सदस्यभीतः ।। ३३ ।।

यदर्जुनेनाऽतिबलं समग्रम् ।
प्रादर्शि वैशिष्टयमिदम् शराणाम् ।।
तत्सर्वमेतत्प्रखरञ्च तस्मात् ।
प्रदर्शयिष्ये रचनां कलानाम् ।। ३४ ।।

कर-स्थितां तामरविन्दमालाम् ।
पश्यन्नमुं क्षीण कृपःकृपोऽयम् ।।
राजन्य पुत्राऽन्य-कृते कृता नो ।
सैषा सभाऽस्माभिरिति व्युवाच ।। ३५ ।।

श्रुत्वा कृपोक्तम् तदशोभनीयम् ।
जज्ञे विवादोऽपि सदस्य वर्गे ।।
भीष्मो-ऽप्यगृहणात्खलु राजदण्डम् ।
अभाषयत् स्पष्टमिदम् सभायाम् ।। ३६ ।।

सभ्याः समस्ताः खलु-शान्ति पूर्वम् ।
शृण्वन्तु तावद् वचनं मदीयम् ।।
समर्थ्यतां नैव वचोभद्भिः ।
घृणास्पदं तत्कृपणं कृपस्य ।। ३७ ।।

इत्येवमुक्त्वा विरतेऽति वृद्धे ।
शान्ताः स्थिताः कौरव केतनेऽस्मिन् ।।
करच्युता साऽप्यरविन्दमाला ।
विसूत्रिताऽऽसीत् सहसा कृपस्य ।। ३८ ।।

पुनः समूचेऽति विशुद्धभावः ।
पितामहः कुण्डलिनं युवानम् ।।
प्रस्तूयतां वत्स ! धनुः शराणाम् ।
विद्यासु वैशिष्ट्यमहो स्वकीयम् ।। ३९ ।।

वीरत्व-विद्या-बल-कौशलानि ।
न चानुवध्नन्ति विशेष जातिम् ।।
शृण्वन्ति वीराः न वृथा प्रलापान् ।
कुर्वन्ति कार्याणि यशस्कराणि ।। ४० ।।

कृत प्रतिस्पर्द्धिवचोऽवसानः ।
स्वजन्म जातं कवचं वसानः ।।
त्रिलोक-दीप प्रिय पुत्र शिष्यः ।
टंकारयामास धनुर्विशालम् ।। ४१ ।।

दोर्दण्ड-दण्ड-ग्रहण प्रचण्डः ।
कोदण्ड-दण्डः सुतरां विरेजे ।।
विपक्षिवर्गाक्षिगणेन साकम् ।
चक्रीबभूवाऽऽशु गुणाऽन्वयेन ।। ४२ ।।

ववर्ष नाराचगणानधिज्यम् ।
अजस्र धारम् जलदोपमानम् ।।
आकर्ण कृष्टम् खलु काल पृष्ठम् ।
कौन्तेय-कर्णस्य वरं धनुस्तत् ।। ४३ ।।

प्राकाशतां चक्रितचाप मध्यात् ।
राधेय-कर्णान्ति विलम्बमानौ ।।
तौ कुण्ड़लावत्यमरेन्द्रचाप- ।
तडिद् गुणाभौ मणि-दीप्यमानौ ।। ४४ ।।

एतत्परं सः खलु शब्द बेधि- ।
वाण-प्रयोगोग्र कलां ततान ।।
क्षणान्तरे सूचिमुखाग्रविद्ध- ।
नेत्राणि लक्ष्याणि च तत्र पेतुः ।। ४५ ।।

आज्ञापयन् मत्स्य-विवेधनाय ।
यन्त्रं क्षणं सज्जयितुं च भृत्यान् ।।
तमाशु यन्त्रान्तर सम्भ्रमन्तम् ।
न्यपातयत्तद्रचनामपश्यन् ।। ४६ ।।

जिह्माऽऽशुगानां सतत प्रयोगैः ।
ते दर्शकाः सञ्चलिता इवासन् ।।
भवत्यकाण्डा विदुषां न केषाम् ।
समुन्नतिः सत्परितोषणाय ।। ४७ ।।

क्षिप्रं धनुर्वेद विदः करान्तात् ।
विनिःसृताऽऽश्चर्यकरी बभाषे ।।
सोपान शोभां परिवर्द्धयन्तीं ।
नाराच पङ्क्तिः खमिवोपगन्तुम् ।। ४८

सः सेतुबन्धः परिकोट बन्धः ।
आविष्कृतः पञ्जर बन्धनान्ते ।।
यमर्जुनाद्यैः प्रियशिष्य वर्गैः ।
द्रोणोऽपि दृष्ट्वा विमुखस्तदासीत् ।। ४९ ।।

निपातयामास च मल्लयुद्धे ।
विभिन्न मल्लान् भुजकण्टकाद्यैः ।।
दावैरनेकैः कृततत्प्रशंसैः ।
प्रयोज्य मनोच्च कला विशेषैः ।। ५० ।।

अश्व द्वयी पृष्ठ धृत द्विपादः ।
प्रधावयामास च वायुवेगम् ।।
स्रवन्मदोत्क्लिन्न कटोत्कटानाम् ।
विघट्टयामास घटाः गजानाम् ।। ५१ ।।

अथो रथान् संक्रमयाञ्चकार ।
विभिन्न मार्गान् कलयाञ्चकार ।।
द्वैरथ्य-युद्धानभयं चकार ।
प्रत्यर्थि वर्गान् शमयाञ्चकार ।। ५२ ।।

तमर्जुनं रूढ महाऽभिमानम् ।
स्वद्वन्द्व युद्धाय वितर्जयिष्यन् ।।
अनन्य सामान्य मसौ शराणाम् ।
प्रदर्शनीं खल्वुप संजहार ।। ५३ ।।

कर्णाऽर्जुनौ द्वावपि तुल्यविद्यौ ।
उद्घोषितौ शीघ्रतरं कृपेण ॥
श्रुत्वैव तां वाचमपास्त सत्याम् ।
रत्नोल्लसत्कर्णतटो जगाद ॥ ५४ ॥

यदीच्छतो द्रोण-कृपौ बलेन ।
अस्याऽर्जुनस्योत्तमतां प्रवक्तुम् ॥
तद् द्वन्द्व-युद्धस्य वरा व्यवस्था ।
विधीयतामाशु मयाऽर्जुनस्य ॥ ५५ ॥

क्षिप्रं तदोत्थाय च भीमसेनः ।
उवाच तं सूर्यसुतम् स-गर्वम् ॥
कुले प्रसूतिः परिचाय्यतां प्राक् ।
ततोऽर्जुनेनाऽऽशु करोतु युद्धम् ॥ ५६ ॥

अश्वे कशाऽऽघात परायणेन ।
कथं त्वया योत्स्यति राज-पुत्रः ॥
अर्हन्ति तावद् भवितुं कथं वा ।
नृपाश्च सूताश्च समाः पृथिव्याम् ॥ ५७ ॥

श्रुत्वाऽऽश्वयम् भीमदुरुक्तिमेनाम् ।
वीरोत्तमः सूर्यमुखं ददर्श ॥
नेपथ्य संस्था परिचीय कर्णम् ।
सा राजमाताऽश्रुमुखी बभूव ॥ ५८ ॥

विबोधिताऽसौ वचनेन धात्र्याः ।
निन्दाभयान्नैव जगाद कुन्ती ॥
उद्घोषितुं ज्येष्ठतमं प्रजानाम् ।
कर्णम् स्व-पुत्रञ्च सहस्ररश्मेः ॥ ५९ ॥

सुयोधनश्चाशु समुत्थितोऽभूत् ।
ज्ञात्वा क्षमं पाण्डव-खण्डनेऽसौ ॥
आज्ञापयामास च मन्त्रिवर्गान् ।
राज्याऽभिषेकाय नृपोत्तमस्य ॥ ६० ॥

निशम्यमन्त्रि-प्रवरास्तदानीम् ।
आनिन्युरेकं मुकुटं महार्हम् ॥
सिंहासनं तीर्थजलं पवित्रम् ।
माल्यादि सम्भार-समायुतास्ते ॥ ६१ ॥

तं सैनिकानां सहवाद्यघोषैः ।
सिंहासनासीनमसौ चकार ॥
अलंचकाराथ तदुत्तमाङ्गम् ।
सञ्जात हर्षो मुकुटोत्तमेन ॥ ६२ ॥

पुरोहितोच्चारित मन्त्र-पूते ।
राज्याऽभिषेकाख्य महोत्सवेऽस्मिन् ।
विशाल भाले तिलकाञ्चितोऽयम् ।
वसूपमानश्च वसुर्बभासे ॥ ६३ ॥

तमङ्गदेशस्य नृपं विधाय ।
सुयोधनः श्रेष्ठतमः कुरूणाम् ॥
उद्घोषयामास जनैः सभायाम् ।
तस्याऽङ्गराजस्य जयं महोच्चैः ॥ ६४ ॥

अङ्गश्रिया लज्जदनङ्गराजम् ।
तमङ्गराजं सुतरां प्रशंसुः ॥
सर्वेऽपि ते नागरिकाः वरिष्ठाः ।
कर्णैः पपुः कर्ण-कथामृतानि ॥ ६५ ॥

भीष्माद्याश्च यय गृ्हाण्यति मुदा स्पर्द्धा-समाप्त्यन्तरम् ।
द्रोणश्चाऽपि बभूव सः प्रतिदिनं चिन्तातुरः "फाल्गुने" ।।
"कुन्ती" व्याकुलिता पपात सहसा धात्र्या समाश्वासिता ।
"कर्णो"नैव जगाम राज-भवनं सार्द्धम् स "दुर्योधन": ।।६६।।

।। कर्ण-प्रातिद्वन्द्विकं नाम पञ्चम सर्गः समाप्तः ।।



॥ श्रीः ॥

# अंगराजत्वन्नाम षष्ठः सर्गः

लब्धाऽनुज्ञः स तातेन ।
प्रसन्नेन स्व-कर्मणा ॥
अङ्गदेशमलङ्कर्तुं ।
"मङ्गराजो" मनो दधौ ॥ १ ॥

चम्पापुरीञ्च तामेव ।
राजधानीं चिकीर्षितुम् ॥
दिदृक्षुर्मातरं राधां ।
गमनाय समुद्ययौ ॥ २ ॥

शत्रुञ्जयं समाहूय ।
भ्रातरं प्राण-सम्मितम् ॥
स-स्मितं प्रीतिमापन्नः ।
तमुवाच वरं वचः ॥ ३ ॥

मातरं सम्परिद्रष्टुम् ।
भृशं लालायते मनः ॥
चम्पापुरी च समृद्धा ।
राजधानी चिकीर्ष्यते ॥ ४ ॥

तदाशु भ्रात रुत्तुङ्गान् ।
वायु वेग समान् गतौ ॥
रथोत्तमं समानीय ।
श्वेताश्वान् तत्र योजय ॥ ५ ॥

त्वमेव कुशलस्तात ।
मम सारथ्य-कर्मणि ।।
जन्मतः सर्वं कार्येषु ।
मम पृष्ठाऽनुगस्तथा ।। ६ ।।

त्वमतीव सुशीलोऽसि ।
दक्षिणोऽसि भुजो मम ।।
धनुर्वेदादि विद्यासु ।
सारथ्ये च गतिस्तव ।। ७ ।।

यथाज्ञप्त स्तथा कृत्वा ।
शीघ्रमेव रिपुञ्जयः ।।
चतुर्भिर्वाजिभिर्युक्तम् ।
स्थापयामास तं रथम् ।। ८ ।।

तावुभावपि सुस्नातौ ।
गङ्गायाः निर्मले जले ।।
सहस्र-रश्मये पूर्वम् ।
ददतुः पुष्प-चन्दनम् ।। ९ ।।

तदन्तरं हि तत्रत्यं ।
वस्त्राऽऽगारञ्च जग्मतुः ।।
दधतुर्नव वस्त्राणि ।
राज-राजोचितानि तौ ।। १० ।।

पूर्वमङ्ग प्रजानाथो ।
रथ मध्य उपाविशत् ।।
तदनु प्रेरयामास ।
वाजिवर्यान् रिपुञ्जयः ।। ११ ।।

सुयोधनेन सार्द्धं वै ।
कृताऽवश्यक मन्त्रणः ।।
ववन्दे च्च विनम्रः सन् ।
स्व पितुश्चरणौ शुभौ ।। १२ ।।

तदङ्ग रक्षकाः शीघ्रम् ।
विश्वस्ताः अश्व सादिनः ।।
अनुजग्मुः प्रशंसन्तः ।
कृत शस्त्र परिग्रहाः ।। १३ ।।

पश्यन्तो विविधान् ग्रामान् ।
चित्राणि नगराणि च ।।
विलसत्फलपुष्पाणि ।
वनानि हरितान्यपि ।। १४ ।।

पूर्वम् विश्रुत वृत्तानाम् ।
पौराणाञ्च पदे पदे ।।
विविधान्युप हाराणि ।
कृतातिथ्यः समाददौ ।। १५ ।।

आश्रमेषु मुनीन्द्राणाम् ।
आशिर्वादान् कृतार्हणः ।।
शिरसा स्वीचकाराऽसौ ।
श्रद्धया सत्फलप्रदान् ।। १६ ।।

श्रुत स्यन्दन निर्घोषाः ।
अप्यत्रस्ताः नरोत्तमम् ।।
हरिणाश्च हरिण्यश्च ।
पपु र्नेत्राञ्चलैरमुम् ।। १७ ।।

केवलं ग्राम-सुन्दर्यो ।
ददृशुर्न कुतूहलात् ॥
पुराणाञ्च विलासिन्यः ।
स्पृहां चक्रुरिमं प्रति ॥ १८ ॥

बालाः वृद्धाः युवानश्च ।
विश्वासैकान्त-भाजनम् ॥
सु प्रसन्नं प्रियालापैः ।
अर्चयामासु रञ्जसा ॥ १९ ॥

पिता प्राप महाव्योम्नि ।
प्रतीच्यद्भुत सङ्गमम् ॥
पृथिव्याञ्च तथा पुत्रः ।
त्रिवेण्याश्चारु सङ्गमम् ॥ २० ॥

तत्रत्यैश्च जनैः स्निग्धैः ।
पूर्वमेव सुसज्जिते ॥
शिविरे गमयामासुः ।
कृताऽऽतिथ्याः निशां शुभाम् ॥ २१ ॥

ब्राह्मे मुहूर्ते चोत्थाय ।
कृत नित्यक्रियो वसुः ॥
आकण्ठ मग्नो गङ्गायाम् ।
गायत्रीं प्राजपन्मुदा ॥ २२ ॥

ददर्श च पुनः प्राच्याम् ।
सावित्रम् भव्य वैभवम् ॥
सप्त-सप्ति-समुत्कृष्टम् ।
विश्व-बुद्धेः प्रचोदकम् ॥ २३ ॥

असंख्य रश्मिभिर्दीप्तैः ।
रवच्छिन्न सुराऽऽस्पदम् ॥
कनक-द्रव-वृष्ट्येव ।
तर्पिताऽऽशा लसन्मुखम् ॥ २४ ॥

चिर प्रतीक्षा संयुक्तैः ।
वीक्षितं नलिनी जनैः ॥
प्रिय संगम संलग्नैः ।
चक्रवाकी-गणैः स्तुतम् ॥ २५ ॥

विकसन्मुख पद्मोऽसौ ।
पित्र्यम् भर्गः समर्चयन् ॥
सावित्रान् वैदिकान् मन्त्रान् ।
स्वरेणोच्चैरथाऽपठत् ॥ २६ ॥

"आकृष्णेन च गच्छन्तम् ।
रजसा मर्त्यममृतम् ॥
कुर्वन्तं सम्प्रपश्यन्तम् ।
सर्वाणि भुवनानि तम् ॥ २७ ॥

हिरण्य-परिदीप्तेन ।
प्रयान्तं सद् रथेन च ॥
नमामि त्वां महातेजाः ।
तपन्तं तपतां पतिम् ॥ २८ ॥

शुश्रावैतत्परं घोरम् ।
स्वर्नद्याः पश्चिमे तटे ॥
जलक्रीड़ा-समासक्त- ।
कन्यानां क्रन्दनं महत् ॥ २९ ॥

तत्राऽऽगच्छदति क्षिप्रम् ।
तरन्तीं दृष्टवानसौ ॥
निमग्नां सलिले घोरे ।
तरङ्गैश्च भयङ्करे ॥ ३० ॥

दयया बाधितश्चासौ ।
सलिलान्तः समाविशत् ॥
सम्प्रगृह्य करं तस्याः ।
तटोपान्ते न्यवेशयत् ॥ ३१ ॥

स्वस्थाऽवस्था-स्थितां ज्ञात्वा ।
पप्रच्छ च कुलादिकम् ॥
सङ्केतमुपलभ्यास्याः ।
चतुरैकाऽवदत् सखी ॥ ३२ ॥

महोदय ! प्रसेनस्य ।
प्रयाग-नृपतेः सुता ॥
धत्ते सर्वाङ्ग-सौन्दर्या ।
"वृषाली" त्यमिधा-विधाम् ॥ ३३ ॥

सर्वातिशायिलावण्या ।
जन्मान्तर वराप्सराः ॥
"पद्मगंन्धे"ति कञ्जाक्षी ।
गुणैः सर्वैः प्रशस्यते ॥ ३४ ॥

त्रिकालज्ञेन केनाऽपि ।
वुधेन प्रति बोधिता ॥
"हस्ते गृहीत्वा त्वां बाले ।
सलिला दुद्धरिष्यति ॥ ३५ ॥

स एव दिग्जयी वीरः ।
कुण्डली कवची पुमान् ।
प्रियपुत्रि ! वदान्यस्ते ।
प्राण-नाथो भविष्यति" ।। ३६ ।।

दैवेनोत्पादितस्तस्मात् ।
युवयोर्वै गुणाऽञ्चितः ।।
तस्मात् स्वीक्रियतां राजन् ।
सङ्गमः सङ्गमे ध्रुवम् ।। ३७ ।।

सखी-सम्भाषणान्ते सा ।
राजपुत्री च सो नृपः ।।
परस्परञ्च वीक्षन्तौ ।
दधतुः स्वान्तरे रतिम् ।। ३८ ।।

ईषल्लज्जा निमीलद्भिः ।
वक्राऽपाङ्गैश्च लज्जितैः ।।
व्यञ्जयामासतुः स्वीयम् ।
शनैः शृंगार चेष्टितम् ।। ३९ ।।

परस्पराऽऽसक्तमिमम् तदानीम् ।
यूनोर्युगं निन्युरितो निकुञ्जे ।।
ताः कामशास्त्रस्य महा विदुष्यः ।
प्रोद्यत्समस्याः सकलाः वयस्याः ।। ४० ।।

सखी-कराग्रादवतार्य शीघ्रम् ।
लसत्प्रवालां स्थल-पद्ममालाम् ।।
समर्पयामास गले सुरम्ये ।
"कर्णस्य" कर्णान्तिगता-"वृषाली" ।। ४१ ।।

कण्ठे लसत्पाटल पुष्पमालः ।
तत्राऽङ्गराजः-सुतरां रराज ।।
प्रयाग सुभ्रु-हृदयप्रदत्त ।
प्रेमार्चिताङ्गः सुतरामिवाऽसौ ।। ४२ ।।

वसूपमानः स वसुः प्रियायाः ।
आरक्तमाकृष्य करं करेण ।।
रत्नाङ्कुरै र्भासित नाम मुद्राम् ।
स्व-मुद्रिकामङ्गुलिगाञ्चकार ।। ४३ ।।

पुनः स्वकीयां नव-रत्नमालां ।
आसञ्जयामास स कान्त-कण्ठे ।।
तत्काल कूजत्कुच चक्रवाका ।
बभार कान्ति परमां प्रियाऽस्य ।। ४४ ।।

महार्हरत्नोल्लसिताङ्ग कान्तिः ।
प्रसेनपुत्री सुतरां चकाशे ।।
दीप्तैर्ग्रहैरुच्च पदाऽधिरूढैः ।
प्रदत्त भाग्योदय-राजितेव ।। ४५ ।।

मासद्वयान्ते किल राज-पुत्रीम् ।
भ्रात्रा "सुसेनेन" पुरं गजाख्यम् ।।
आगन्तुमामन्त्र्य ययौ नृपालः ।
निन्युश्च तां राज-कुलं वयस्याः ।। ४६ ।।

रथमारुह्य स्व-भ्रात्रा ।
आप्तैश्च पुरुषैः सह ।।
जगाम वायुवेगेन ।
अंग-राज्य-वसुन्धराम् ।। ४७ ।।

देव-नद्या स्तटे दीर्घे ।
दूराच्चिरमुपेक्षिताम् ।।
प्रतीक्षमाणां तां प्राप ।
सायम् चम्पापुरीम् शुभाम् ।। ४८ ।।

सर्वतः प्रथमं द्रष्टुम् ।
मातरं स्वं गृहं ययौ ।।
ववन्द चरणौ तस्याः ।
साऽनुजः प्रीत मानसः ।। ४९ ।।

राधा वीक्ष्य स्वकौ पुत्रौ ।
युवानावुन्नतौ भृशम् ।।
समाजघ्रौ प्रसन्नात्मा ।
मस्तकौ प्रेमतस्तयोः ।। ५० ।।

नागराः ज्ञातवृत्ताश्च ।
तं द्रष्टुं समुपाययुः ।।
विश्लिष्टञ्च बहोः कालात् ।
प्राप्त राज्यं स्वयं बलात् ।। ५१ ।।

निशायां विगतायाञ्च ।
रवावाकाशमञ्चति ।।
कृत नित्यक्रिये चास्मिन् ।
पौराः "जय" मथाऽब्रुवन् ।। ५२ ।।

अंगदेशे च सर्वत्र ।
जयोद्घोष-समन्विताः ।।
आसन्महोत्सवाः नित्यम् ।
स-पताकाध्वजोच्छ्रयाः ।। ५३ ।।

प्रतताश्चाकचक्येन ।
दीपावल्यो गृहे गृहे ।।
विप्राः विस्तारयामासुः ।
यज्ञै वैंदिक-संस्कृतिम् ।। ५४ ।।

भृशमुन्नतयाञ्चक्रे ।
विपन्नाञ्च कृषि-क्रियाम् ।।
तदनु श्रेष्ठ-वाणिज्यम् ।
निर्व्याजं द्रव्य-वर्द्धनम् ।। ५५ ।।

निर्धनाँश्च समुद्धर्तुम् ।
कार्य-शालाः गृहे गृहे ।।
निर्ममे च लघूद्योगान् ।
महतश्चाऽपि भूरिशः ।। ५६ ।।

श्रमिकाणाञ्च कार्येषु ।
वेतनान्यप्यवर्द्धयत् ।।
शिक्षायाश्च कलानाञ्च ।
विकाशं सर्वतो मुखम् ।। ५७ ।।

वृद्धानाञ्च शिशूनाञ्च ।
पोषणं शिक्षणं तथा ।।
स्त्री-शिक्षा-सुप्रबन्धञ्च ।
स्व-राज्ये चाकरोदसौ ।। ५८ ।।

पशूनां पालनं सम्यक् ।
गो-वंशस्य विवर्द्धनम् ।।
न्यायस्य पक्ष-राहित्यम् ।
सुलभत्वं तथाऽकरोत् ।। ५९ ।।

गणतन्त्र-विधानेन ।
स्थापयामास शासनम् ।।
वर्णानामाश्रमाणाञ्च ।
सु-व्यवस्थां चकार सः ।। ६० ।।

राष्ट्रेऽस्मिन्नङ्गराज्यञ्च ।
यथा विकसितं बभौ ।।
न कदाचिच्च संसारे ।
राज्यान्तरमभूत्तथा ।। ६१ ।।

सचिवान् गुप्त-सर्वार्थान् ।
राजनीति-विशारदान् ।।
राज्ये नियोजयाञ्चक्रे ।
ऽधिकारि-प्रवरांस्तथा ।। ६२ ।।

जनतामत सम्पन्नाः ।
विश्वस्ताः सत्यवादिनः ।।
अङ्गदेशे तथाऽस्याऽऽसन् ।
सं विभागेषु मन्त्रिणः ।। ६३ ।।

सैनिकाः शत्रु-दुर्धर्षाः ।
खड्ग-चर्म-धनुर्धराः ।।
समृद्धस्याऽङ्गराज्यस्य ।
रक्षायां विनियोजिताः ।। ६४ ।।

अङ्गराजोऽङ्गदेशस्य ।
गङ्गाऽम्भोभिः पवित्रिताम् ।।
"चम्पापुरी"ञ्च तामेव ।
राजधानीमघोषयत् ।। ६५ ।।

एवमत्यन्त निश्चिन्तः ।
साऽनुजः सः कृताञ्जलिः ।।
राधां सम्प्रार्थयामास ।
विनम्रो राज-मातरम् ।। ६६ ।।

मातः सम्पूर्ण राज्येऽस्मिन् ।
सु-व्यवस्था कृता मया ।।
त्वया सह प्रतिष्ठासुः ।
कुरूणां नगरं प्रति ।। ६७ ।।

"एव"मित्यभ्यनुज्ञातः ।
समाश्वास्य च नागरान् ।।
रथे संयोजया मास ।
शीघ्रगान् श्वेत-वाजिनः ।। ६८ ।।

पुनश्च मन्त्रिणः कृत्वा ।
निस्तन्द्रान"ङ्ग"-रक्षणे ।।
द्रुतं प्रवर्तयाञ्चक्रे ।
कुरून् प्रति रथोत्तमम् ।। ६९ ।।

दिनान्ते चाप्यसौ प्राप ।
गजाङ्कित-महाध्वजः ।।
रथः कुत्राऽप्यविश्रान्तः ।
सुन्दरं हस्तिनापुरम् ।। ७० ।।

जग्मुस्ते सुप्रसन्नास्याः ।
सर्वोच्चं निज मन्दिरम् ।।
वीक्षिताश्च गवाक्षेण ।
प्रसन्नाऽधिरथेन वै ।। ७१ ।।

"सुसेन" श्चाऽप्यतः पूर्वम् ।
"वृषाली"-सहितो मुदा ।।
अध्युवासैक-देशेऽस्य ।
नगरस्य मनोहरे ।। ७२ ।।

एवम् महाभाग्य समन्वितोऽयम् ।
सहस्त्ररश्मेः प्रवरस्तनूजः ।।
सुयोधनाशा-गगा-चारुकेन्द्रम् ।
प्रशस्यमानोरुजयश्चकाशे ।। ७३ ।।

।। कर्णाऽङ्गराजत्वन्नाम षष्ठः सर्गः समाप्तः ।।

---

॥ श्रीः ॥

# वैवाहिकम् नाम सप्तमः सर्गः

विचित्र शोभाम्प्रथयन् पृथिव्याम् ।
सम्पूर्ण वातावरणं प्रकृत्याः ॥
कुर्वन् मनोज्ञं परिवर्तनेन ।
सञ्चारयन् शं हरितां गणेषु ॥ १ ॥

समुन्नयन्नुच्चतमां पताकां ।
मीनाङ्कितांकाम् मकरध्वजस्य ॥
नैराश्य-रोगान्त निशा सदन्तः ।
प्रादुर्बभूवाऽथ लसन् वसन्तः ॥ २ ॥

हारित्य-लालित्य-विलासितानि ।
बाल-प्रवालैर्हरितां मुखानि ॥
स्थलारविन्दैः समलङ्कृतानि ।
मत्त-द्विरेफैः परिचुम्बितानि ॥ ३ ॥

दिनेन सार्द्धम् परिवर्द्धमानः ।
रवेः प्रतापः खरतां प्रपेदे ॥
शैत्येन सार्द्धम् जगति क्रमेण ।
संकोच मीयुः सरितां जलानि ॥ ४ ॥

नवाः प्रवालाश्च लताः द्रुमाणाम् ।
प्रभाङ्कुराभाः इव विद्रुमाणाम् ॥
प्रपेदिरेऽजङ्गम-जङ्गमानाम् ।
आशा-वितानेन विचित्र साम्यम् ॥ ५ ॥

आम्राः विरेजुश्च नवोद्गताभिः ।
सुगन्धिताशाः कल मञ्जरीभिः ।।
वाचालिताभिः कल-कोकिलाभिः ।
मधोर्मधु-स्वागतमुद्वहन्तः ।। ६ ।।

वसन्तकाले सहकारवृक्षाः ।
सच्चामरीभूत सुमञ्जरीकाः ।।
संवीजयन्तः ऋतुराजमुच्चैः ।
जग्मुः प्रतीतिं विदुषां गणस्य ।। ७ ।।

पद्माननं व्यायत पद्मनेत्राः ।
विकासमानाः विलसद्विकासम् ।।
धृताऽनुरागाः सतताऽनुरक्तम् ।
भेजुर्नलिन्यश्च वरं वसन्तम् ।। ८ ।।

पलाश-पुष्पाऽधरपान दाने ।
कृतत्वराऽऽभाति वनस्थलीयम् ।।
रम्यं वसाना हरितं दुकूलम् ।
लक्ष्मीरिवान्या प्रिय माधवस्य ।। ९ ।।

नाना प्रसूनैऽर्ग्रथितोरुमाला ।
नव प्रवालाऽञ्चलमुद्वहन्ती ।।
स्वयं वरीतुं युवकं वसन्तम् ।
विभाव्यते प्रेष्ठतमं वनाली ।। १० ।।

प्रवासिकान्त-प्रमदा-कृतान्तः ।
विलास-हासाऽनु भवत्सदन्तः ।।
शृंगार-चेष्टाऽऽकलना-कृदन्तः ।
वनेषु चारुर्व्यलसद् वसन्तः ।। ११ ।।

उन्मादकोऽयम् युवती-जनानाम् ।
भ्रान्तानि कुर्वन् युवमानसानि ।।
विभ्रंशयन् सच्चरितं यतीनाम् ।
विचालकश्चाऽस्ति पथः सतीनाम् ।। १२ ।।

उत्पादयन् सत्कुसुमानि लोके ।
समर्पयिष्यन् मकरध्वजाय ।।
मनोहराँश्चापशरान् विधातुम् ।
विजृम्भते मित्रवराय नित्यम् ।। १३ ।।

गुञ्जन्ति पुष्पेषु रस-प्रदेषु ।
गायन्त उच्चैः सुयशः किलास्य ।।
मधूनि कर्तुं मधुराणि भृङ्गाः ।
मधु-प्रमत्ताभिरिमे प्रियाभिः ।। १४ ।।

जगद्वशीकर्तुमिमं निजाप्तम् ।
सेनापतित्वेन वृणोति नित्यम् ।।
विलासिनी-मानस-मान्य-केतुः ।
विभिन्न-सेतुः किल "मीनकेतुः" ।। १५ ।।

अस्मिन्नसम्भूत विमान-भङ्गाः ।
पुष्पोच्चयोत्पादित मान भङ्गाः ।।
ऋतौप्रियोल्लासित हृत्तरङ्गाः ।
भवन्ति देव्यो; लसदन्तरङ्गाः ।। १६ ।।

ऊर्ध्वम् प्रसर्पन्नव कन्दलानि ।
हरन्ति नूनम् कदली-दलानि ।।
तस्य त्रिलोकीं-जयिनः पताका- ।
गणस्य शोभां मकरध्वजस्य ।। १७ ।।

आम्राणि माधुर्य-विजृम्भितानि ।
स्थूलानि पीतानि सुख-प्रदानि ।।
नीचैर्विधातु समलं वसन्ते ।
विलासिनीनाम् स्तन-मण्डलानि ।। १८ ।।

दुःखान्यपाकर्तुमिव त्रिलोक्याम् ।
प्रवर्तते सन् कुसुमाकरोऽयम् ।।
रोगानशेषान् शमयन्ति शीघ्रम् ।
उत्पादयिष्यन् सकलौषधानि ।। १९ ।।

लतोत्तमानां नव-माधवीनाम् ।
पुष्पोच्चयान्निर्दय मर्दयन्ति ।।
तीक्ष्णैः कराग्रैर्भ्रमराः वसन्ते ।
कुचानिवोच्चैः प्र-वराः वधूनाम् ।। २० ।।

दोलाऽधिरोहेण चलद् दुकूलाः ।
नृत्यत्कुचाः दृश्य-नितम्ब-बिम्बाः ।।
प्रदर्शयन्तीव निशा-प्रदर्श्यम् ।
वस्तु, प्रशस्तं प्रमदाः युवभ्यः ।। २१ ।।

जलाशयेषु प्रतिबिम्बिताङ्ग्यः ।
प्रिय-प्रसङ्गाः जलकेलि लोलाः ।।
मुखारविन्देन पराभवन्त्यः ।
तरन्ति पद्मान्यपराः युवत्यः ।। २२ ।।

अवेक्ष्य साचिव्य-विधौ समर्थम् ।
कामस्य चैनम् सुतरां स्वयम्भूः ।।
ददा वभिख्या "मृतु-राज" वाच्याम् ।
जयं समुद्घोष्य मुखैश्चतुर्भिः ।। २३ ।।

अस्मिन्नृतौ स्वे परमोच्चराशौ ।
रविं दधाने प्यरविन्द-धाने ।।
कर्णस्य कर्णान्तिचरं स्वचापम् ।
टंकारयामास च पुष्प धन्वा ।। २४ ।।

विचुम्ब्य माने नव-यौवनेन ।
स्वकाऽधिकां सुन्दरतां ददाने ।।
ईर्ष्याऽभिभूतः इव पञ्चबाणीम् ।
सः पञ्चबाणो युगपन्मुमोच ।। २५ ।।

इतश्च भूयः सहसा वृषाली- ।
माली जनैः शान्तमुपास्यमानाम् ।।
स्वस्याः रते रप्यतिशायि-शोभाम् ।
निपीडयामास शितैः शराग्रैः ।। २६ ।।

तौ द्वावपि व्याकुलतां दधानौ ।
परस्परं संगमने सयत्नौ ।।
न प्राप्तवन्तौ नलिनी-दलानाम् ।
शय्यासु सुप्ता वपि शान्त-निद्राम् ।। २७ ।।

अथाङ्गराज्य-प्रमुखस्य तस्य ।
प्रासाद-मध्यं सहसाऽऽजगाम ।।
सुयोधन स्तत्कुशलं पिपृक्षुः ।
राज्य-व्यवस्था-विषयेऽङ्गदेशे ।। २८ ।।

अवर्णयत्सर्वमतिप्रसन्नः ।
मित्राय तां प्रेम-कथां, तथाऽसौ ।।
'सु-सेन" माहूय विवाह-योग्यम् ।
निर्धारयामास दिनं प्रशस्तम् ।। २९ ।।

सुनिश्चिताऽक्षय्य्-तिथि स्तृतीया ।
सुमङ्गला लग्नवलाऽन्विता च ॥
नाना विधानानुभयोर्विवाहे ।
सम्भार-भारान् कलयाञ्चकार ॥ ३० ॥

प्रातः समुत्थाय खगेन्द्र-सूनुः ।
स्नास्यन् तथाऽर्कञ्च समर्चयिष्यन् ॥
रथं स्वकीयं परिचालयन्, तम् ।
नित्यं ययौ देव-नदी-तटेषु ॥ ३१ ॥

स चैकदा भीष्म पितामहेन ।
गङ्गा-तट-प्रान्तमुपागतेन ॥
आकृष्ट-चित्तेन च कुण्डलाभ्याम् ।
उक्तः प्रसन्नेन कृतादरेण ॥ ३२ ॥

वत्स ! त्वयि वत्सलता मदीया ।
प्रवर्द्धते चाऽनुदिनं प्रवीर ! ॥
स्पर्द्धा-दिने तेऽति विचित्रवाण- ।
प्रयोग-दाक्ष्येण मुदाऽन्वितोऽस्मि ॥ ३३ ॥

तस्माद् भवन्तं भुवनैक वीरम् ।
नितान्त मातङ्ककरं रिपूणाम् ॥
उद्धारकं दीन-गणस्य लोके ।
मही-महेन्द्रञ्च समर्थयामि ॥ ३४ ॥

श्रुत्वा गिरं कुण्डल मञ्जुकान्तिः ।
लसत्तनुत्राण-वरोऽङ्गराजः ॥
धनुर्धराग्रयम् प्रवरं कुरूणाम् ।
बद्धाञ्जलिस्तम् शिरसा ववन्दे ॥ ३५ ॥

सुयोधनो विश्व धराधरेन्द्रान् ।
महर्षि वर्यान् महतो बुधाँश्च ॥
तयोर्विवाहस्य महोत्सवेऽस्मिन् ।
निमन्त्रयामास सहादरेण ॥ ३६ ॥

अमन्दमानन्द महाम्बु राशि ।
समुत्सवोत्तुङ्गतरङ्ग पूर्णाम् ॥
गजेन्द्र वाजीन्द्र सुनक्र-चक्रम् ।
समुद्रितं राजकुलं बभाषे ॥ ३७ ॥

रत्नैः सुवर्णैश्च विनिर्मितानि ।
संसार-शिल्पि-प्रवरैः कृतानि ॥
आभूषणानि प्रवराणि काले ।
वधू-वराभ्याञ्च समर्पितानि ॥ ३८ ॥

आगन्तुकेभ्यश्च पुरे नृपेभ्यः ।
आवासनार्थम् भवनोत्तमानि ॥
नानोपचाराणि सुख-प्रदानि ।
विचित्र शय्यान्युपकल्पितानि ॥ ३९ ॥

निर्मापितश्चैकविशालकायः ।
विभिन्न मञ्चासन वर्ग शोभी ॥
विलम्बिमाल्योरु वितान भव्यः ।
सन् मण्डपः प्रोच्चतमो विवाहे ॥ ४० ॥

सर्वोत्तमे मञ्चवरे सुरम्ये ।
सिंहासनं स्वर्णमयं तदानीम् ॥
तस्यां महामण्डप मध्य भूमौ ।
सु-सज्जितं शिल्पिवरैरभिज्ञैः ॥ ४१ ॥

एकत्र मञ्चेषु धराऽधिपानाम् ।
अन्यत्र पङ्क्तौ जनता-जनानाम् ।।
सर्वोपचारैः परिशोभितानि ।
निवेशितानि प्रचुराऽऽसनानि ।। ४२ ।।

सुकेतकी-पाटल-गन्धपूर्णैः ।
मिष्टान्न पूर्णैर्मधुरैर्घृताक्तैः ।।
पृथक् पृथक् ल वणिकैः पदार्थैः ।
रेजुश्च पेयैरपि भुक्ति-शालाः ।। ४३ ।।

विभिन्न देशेषु विनिर्मितानाम् ।
शिल्पि-प्रकाण्डैः परिसेवितानाम् ।।
स्त्रीभ्यो नरेभ्यश्च सदंशुकानाम् ।
संघै र्विरेजुः खलु वस्त्रशालाः ।। ४४ ।।

गजाह्वयेऽस्मिन्नगरे गृहाणाम् ।
बभूव सज्जा, कदली-विशेषैः ।।
अट्टालिका-राजनिकेतनानि ।
रेजुर्भृशं कम्पित-केतनानि ।। ४५ ।।

बभुः पुनश्चाऽपि विकीर्ण पुष्पाः ।
विचित्र पण्याः किल राजमार्गाः ।।
दीपावलीभिश्च लसत्प्रभाभिः ।
आकाश दोपैश्च पुरं चकाशे ।। ४६ ।।

सुवासिनीनां प्रमदा जनानाम् ।
नितान्तमुत्साहित मानसानाम् ।।
गृहे गृहे मङ्गल गीतकानि ।
साऽऽस्वादमुच्छुश्रुविरे जनोघैः ।। ४७ ।।

दूरी कृतैरावत दुर्मदानाम् ।
विभूषितानाञ्च महागजानाम् ॥
अलङ्कृतानां किल सैन्धवानाम् ।
बभुः प्रमत्तानि गताऽऽगतानि ॥ ४८ ॥

सुधूपिते मण्डप सर्वभागे ।
वाद्येषु नाना ध्वनिमुद्गिरत्सु ॥
नृत्य-प्रमत्तासु वराङ्गनासु ।
नृपेषु सिंहासन-संस्थितेषु ॥ ४९ ॥

वेदीषु विद्वद्भिरुदञ्चितासु ।
हृष्यत्सु सर्वेष्वपि बान्धवेषु ॥
वरः समग्रैरभिनन्दितोऽयम् ।
सिंहासनं प्रोच्चमलञ्चकार ॥ ५० ॥

वरेऽङ्गराजे कलिताङ्गरागे ।
सु कुण्डले सत्कवचं दधाने ॥
किरीट रत्नाङ्कुर चुम्ब्यमाने ।
धृतोरुहारे सुषमा प्रसारे ॥ ५१ ॥

शशिप्रभच्छत्र विभात शीर्षे
सुचञ्चलच्चामरवीज्यमाने ॥
केयूर सन्नद्ध भुज-प्रदेशे ।
दृष्टिः समेषां परिकेन्द्रिताऽभूत् ॥ ५२ ॥

दुःशालया प्रेषित दिव्यवस्त्रा ।
ऽलङ्कार सौभाग्य महोपहारा ॥
वधू-प्रसादाय, "पृथा" सुगुप्तम् ।
आसीद् विवाहे सुतरां प्रसन्ना ॥ ५३ ॥

विचित्र-सज्जा-समलंकृताङ्गी ।
नरैः सुवाहूये च वधूर्विमाने ॥
विराजमानाऽनुगता पुरन्ध्री- ।
वर्गैः शुभम् मण्डपमाविवेश ॥ ५४ ॥

तदा समं मङ्गलवाद्य घोषैः ।
विभिन्नतुर्यध्वनिभिर्मनोज्ञैः ॥
उच्चासनेभ्यश्च समुत्थितास्ते ।
तस्याः नरेन्द्राः अभिनन्दनाय ॥ ५५ ॥

समांशदेशस्थ-विमान दण्डाः ।
सुचारु वस्त्राः पुरुषाः सुमन्दम् ॥
मञ्चान्तरे राज-पथे चलन्तः ।
प्रभावयामासुरलं सदस्यान् ॥ ५६ ॥

अग्रे व्रजन्ती प्रतिहार रक्षी ।
सुवर्ण वेत्राऽञ्चित चारु हस्ता ॥
प्रशिक्षिताकर्मसु सैनिकानाम् ।
नियन्त्रयामास महाजनौघम् ॥ ५७ ॥

विमान-यानेऽति समीपभाजि ।
मुख्यस्य मञ्चस्य सखी समूहः ॥
निनाय तां सर्व-जगत्प्रदीपाम् ।
त्रैलोक्य-दीप-प्रभवाऽभिमुख्यम् ॥ ५८ ॥

ततः कराभ्यामति कोमलाभ्याम् ।
वि-द्योतितामाम्र-मधूक पुष्पैः ॥
मालां विचित्रैर्ग्रथितां स्थलाब्जैः ।
कण्ठेऽर्पयामास वधूर्वरस्य ॥ ५९ ॥

तत्काल मुच्चैः सकलै र्नृपालैः ।
उत्थापितश्चारुतरः कराग्रैः ॥
ध्वनिः स-हर्षम् "जय"शब्द-युक्तः ।
द्वयोर्महाऽऽकाश तलं बिभेद ॥ ६० ॥

पुरन्ध्रिवर्गाश्च वधू-समेतं ।
वरं समानिन्युरथाऽर्चयनाय ॥
कन्या प्रदानान्तर योजकाग्निम् ।
सन्तोषयामास घृतेन यज्वा ॥ ६१ ॥

विसृज्य लाजाँश्च सु-सेन-दत्तान् ।
प्रसादितेऽग्नौ, परिचक्रमे तम् ॥
साङ्गुष्ठ-पाणिग्रहणा, वरेण ।
नितान्त-लज्जाऽवनता वृषाली ॥ ६२ ॥

परिक्रमन्नग्र-वधू-समेतः ।
घृतेन लाजैश्च सु-तृप्तमग्निम् ॥
सहस्र-रश्मिः प्रभयाऽङ्गराजो ।
यथा सुमेरुं परितश्चकाशे ॥ ६३ ॥

सिन्दूर-सीमन्तित केशपाशाम् ।
सीमन्तिनीं तां हृदये स्पृशन् सः ॥
"ध्रुवं" नवोढां नमयाञ्चकार ।
स्मिताञ्चितास्यां-कृत मन्दहासः ॥ ६४ ॥

दत्ताशिषौ विप्रवरैः प्रसन्नैः ।
तौ दम्पती प्रीततमौ तदानीम् ॥
"राधा"मथश्चा"धिरथं" विनम्रौ ।
प्रणेमतुः सत्पितरौ स्वकीयौ ॥ ६५ ॥

पौष्पञ्चाऽप्यतिचण्ड मण्डिततमं कोदण्डमुद्दण्डयन् ।
प्रत्यञ्चां परिसाधयन्नतितरां गुञ्जद्द्विरेफैर्वराम् ।।
आकर्णम् परिकृष्य सम्मिलितयोः कर्णे विधुन्वन्धनुः ।
पुष्पेषू रति-संयुतः सुरमयन् "कर्णम्" सिषेवे पुनः ।।६६।।

।। कर्ण-वैवाहिकन्नाम सप्तमः सर्गः समाप्तः ।।

---

॥ श्रीः ॥

# कान्दर्पिकन्नाम अष्टमः सर्गः

विश्वस्य "विश्वस्य" नरेन्द्र-वर्याः ।
विश्वस्य, "कर्णस्य" सुयोग्यतायाम् ॥
स्वीचक्रु रेनच्च "मही-महेन्द्रम्" ।
जग्मुः स्व-देशान् परम-प्रसन्नाः ॥ १ ॥

पञ्चाल-चेदी-मगधाऽधिपानाम् ।
महोत्सवेऽस्मिन्नपि मानितानाम् ॥
अस्मै नृपत्वेन च मान्यताम् ।
मनान्सि कालुष्य-युतान्यभूवन् ॥ २ ॥

एषां नृपाणां तरसाऽचिरेण ।
भविष्य काले दमनं विधित्सुः ॥
विवेश ताम्बूल करङ्कभृद्भिः ।
शुद्धान्तमन्तःपुरचारिणीभिः ॥ ३ ॥

संवीजितो व्यस्तकरीभिराभिः ।
सुचामरैश्चामर वाहिनीभिः ॥
कामोष्मणा सम्परि तप्यमानः ।
वसूपमानोऽप्यभवत्समानः ॥ ४ ॥

ददर्श पर्यङ्क तलोपविष्टां ।
पत्येक-निष्ठां मदन-प्रविष्टाम् ॥
वितान पुष्पैश्च कृत प्रतिष्ठाम् ।
वृषाङ्किताख्यां रमणीमभीष्टाम् ॥ ५ ॥

अति प्रसन्ना प्रिय-दर्शनेन ।
समुत्थिता प्रेम-निदर्शनेन ।।
काम-प्रहारोद्यम दर्शनेन ।
सञ्जात कम्पा सुमुखी बवन्दे ।। ६ ।।

धृताञ्जनां नेत्र युगे वयस्या- ।
गणेन भूषा विलसद्-दुकूलाम् ।।
सिन्दूर विन्दूल्लसितां ललाटे ।
पस्पर्श कान्ताममलां कराभ्याम् ।। ७ ।।

महार्ह शय्या कलितोपवेशाम् ।
अनूपविश्याऽथ वसुः सतृष्णम् ।।
व्यापारयामास विलोचनेऽस्याः ।
मुखे चमत्कार-तिरस्कृतेन्दौ ।। ८ ।।

उवाच चैनामनति प्रगल्भाम् ।
परामृशन्नङ्गमसौ करेण ।।
प्रिये ! स्वलज्जां परिहाय किञ्चित् ।
कृत-प्रसादा भव सम्मुखी मे ।। ९ ।।

ताटङ्क रत्नान्तमुपस्पृशन्सः ।
नासां कदाचिन्नव मौक्तिकाङ्काम् ।।
कृतास्पदं तत्कुच मण्डलाग्रे ।
पस्पर्श हस्तेन महार्घ्य हारम् ।। १० ।।

कदाचिदस्याः रसना गुणाग्रान् ।
विलम्बमानान् जघन प्रदेशे ।।
उन्नीयमानान् सुचिरं कराभ्याम् ।
उद्दीप्त रत्नोल्लसितान् ददर्श ।। ११ ।।

सत्पत्रलेखां हरि चन्दनेन ।
कपोल-युग्मे रचयाञ्चकार ॥
लिलेख तेन स्तन-मण्डलेऽपि ।
कलौ चकोरौ च कला-प्रवीणः ॥ १२ ॥

प्रयाग-सुभ्रूरपि कोमलाभ्याम् ।
तन्मण्डलं कुण्डलयोस्तदानीम् ॥
परिस्पृशन्ती किल रञ्जिताभ्याम् ।
बभौ कराभ्यां कवचं तदियम् ॥ १३ ॥

अन्योऽन्यमेवं परिषक्त चित्तौ ।
भृशं व्याभातां भवने स्वकीये ॥
तारा शशाङ्काविवदीप्यमानौ ।
क्रीडाऽनुरक्तौ गगने निरभ्रे ॥ १४ ॥

कल्पद्रुमाभैस्तरुभिः प्रपूर्णे ।
लताभि उद्यत्कुसुमाऽवलीभिः ॥
सुशोभिते चित्ररवैः खगानाम् ।
उद्यान मध्ये विजहार सायम् ॥ १५ ॥

सरोवरे स्वच्छ-जलेन पूर्णे ।
विहर्तुमुच्चैर्जल-यन्त्र-शोभे ॥
अवातरन्नैकविधैः प्रकाशैः ।
दीप्ते प्रियं कर्तुमसौ प्रियायाः ॥ १६ ॥

सं शोभितेऽनेक-सुगन्धि-पूरैः ।
जले ततारााऽऽशु तया समेतः ॥
विभिन्न रूपां जल-केलि लोलाम् ।
ततान सिञ्चन् प्रतिषिच्यमानः ॥ १७ ॥

अामुच्य नालाल् ललितार विन्दम् ।
प्रिया मुखेनोत्तुलनां चकार ।।
विहाय सौन्दर्य-विलज्जितं तत् ।
प्रासाद-पृष्ठञ्च समारुरोह ।। १८ ।।

अमूल्य वस्त्राऽञ्चित चारु-गात्रौ ।
रत्नाङ्कुरोद्दीपित चन्द्रहारौ ।।
विलोपयन्तौ रतिकाम कान्तिम् ।
पर्यङ्कपीठाऽऽसन गावभूताम् ।। १९ ।।

शची-सपत्न्यां दिशि सञ्चरन्तम् ।
कृत-प्रसाराऽतिशयं क्रमेण ।।
प्रसादयन्तं जगतां मुखानि ।
शान्तम् प्रकाशं सहसा ददर्श ।। २० ।।

ततस्तमो दैत्य विनाशनाय ।
व्योम्नीव चासौ ववृधे क्षणेन ।।
स्वर्गम्प्रमातुं परिवर्द्धिताङ्घ्रेः ।
माया-वटोश्चोरित चार्व भिख्यः ।। २१ ।।

स्यन्दन्तमुच्चैरमृत-प्रवाहम् ।
निजास्य-बिम्बाऽनुकृति-प्रगल्भम् ।।
तारापतेर्बिम्बमतीव रम्यम् ।
अवालुलोकाऽङ्गधरा-सुधांशुः ।। २२ ।।

तामङ्कमारोप्य विशाल नेत्राम् ।
प्रदर्शयन् चारुतरं शशाङ्कम् ।।
बिम्बाधरं पातुमनल्प तृष्णः ।
प्राणेश्वरीं प्रीतमनाः बभाषे ।। २३ ।।

प्रिये ! त्वदीयाऽऽनन कान्ति चौरः ।
सरोजिनीनां सुषमैक चौरः ॥
विलासिनी-मानस-मानचौरः ।
उदेति ताराभिरसौ सुधांशुः ॥ २४ ॥

दिगन्त विस्तीर्णतमाः दिनान्ते ।
प्रवर्द्धयन्तः किल कामकोपम् ॥
कलाः किलास्याऽमृतमुत्किरन्तः ।
आर्तश्चकोरीः परितर्पयन्ति ॥ २५ ॥

तदाऽऽशु कुर्यास्त्वमपि स्वकीयौ ।
सुधा-द्रवै र्नेत्रचकोर वर्य्यौ ॥
सन्तृप्ति भाजौ सुतरां मनोज्ञौ ।
रश्मिच्युतैरेभिरमन्दमिन्दोः ॥ २६ ॥

अवाप्य तेजः प्रसरं पितुर्मे ।
प्रकाश पुञ्जं मनुते स्वकीयम् ॥
पाण्डित्यमासाद्य यथेतरेषाम् ।
जाताऽभिमानाः हि जडाः भवन्ति ॥ २७ ॥

दत्ताऽऽस्पदं प्रेष्ठतरे निजाङ्के ।
प्रपश्य मीनाक्षि मृगं मृगाङ्के ॥
कर्णान्ति विश्रान्त विलोचनेभ्यः ।
दत्तादराः वै रसिकाः भवन्ति ॥ २८ ॥

"मृगेन्द्र-भीतम् त्वममुं मृगेन्द्रम् ।
अवेहि सत्यम् मृगचञ्चलाक्षि ! ॥
भीतेषु नूनम् शरणाऽऽगतेषु ।
दत्ताश्रयाः प्रोच्चजनाः भवन्ति ॥ २९ ॥

वियोगिनीनां प्रमदा जनानाम् ।
तीक्ष्णैः करैर्निर्दय दाह जन्यम् ॥
नूनं विजानीहि शशाङ्क मध्ये ।
तत् कृष्ण चिन्हम् न मृगं शशं वा ॥ ३० ॥

उत्पद्यमानेषु महौषधेषु ।
प्रवर्षति स्वादु-सुधा मवश्यम् ॥
निगद्यतेऽतः पतिरोषधीनाम् ।
त्यागो हि सत्कीर्तिकरो जनानाम् ॥ ३१ ॥

चन्द्रोदये श्वेततमैश्च वस्त्रैः ।
अलङ्कृताङ्ग्योऽभि सरन्ति लोके ।
संकेतिताः प्रेमि-जनान् प्रसन्नान् ।
सौन्दर्य-सारोल्लसितास्तरुण्यः ॥ ३२ ॥

ताम्बूलिकायाः ललितात् कराग्रात् ।
आदाय ताम्बूल-युगम् मनोज्ञम् ॥
समर्पयन्नेकतमं प्रियायै ।
परं न्यधात् स्वीय मुखे प्रसन्ने ॥ ३३ ॥

माधुर्य-पूर्णानि च वर्णनानि ।
तदीय सत्काव्य कला युतानि ॥
सु-श्रोतुमिच्छुः स सुधाकरस्य ।
न्यवेदत्तां कविता-प्रगल्भाम् ॥ ३४ ॥

अनन्तरं मान्यतमा कवीनाम् ।
मन्दं हसन्ती ललिते प्रियाऽङ्के ॥
कृतासना कोकिल चारुकण्ठी ।
सुवर्णयामास शशाङ्क शोभाम् ॥ ३५ ॥

वियुक्त कोकी कुल शापवृन्द- ।
कलङ्किताङ्कं कलये मृगाङ्कम् ॥
प्रसादिताशः कथमन्यथाऽसौ ।
सुधैक सिन्धुः प्रभवेत् किलेन्दुः ॥ ३६ ॥

त्वदीय सत्कुण्डल-मण्डलस्य ।
रत्नाऽनु विद्धाऽखिल कान्ति चौरम् ॥
समस्त संसार जनैर्नमस्यम् ।
पश्यार्यं पुत्र ! प्रकृतेः रहस्यम् ॥ ३७ ॥

रतिप्रियस्याऽयमभिन्न मित्रः ।
त्रैलोक्य सज्जा-सुषमैक केन्द्रम् ॥
तारागणै र्व्योम्नि कृताऽभियानः ।
तारापतिर्भाति महाऽभिमानः ॥ ३८ ॥

प्रवासि-कान्ता प्रबलः कृतान्तः ।
प्रहर्षिताऽनेक चकोर कान्तः ॥
सुधामयूखैः प्रति हर्षितान्तः ।
शीतांशुरुद्याति नितान्त शान्तः ॥ ३९ ॥

अस्योदयेन भ्रमराः समस्ताः ।
सम्पीत ननामधवः प्रमत्ताः ॥
पुष्पेषु रुद्धाः नलिनी वधूनाम् ।
कारागृहेषुत्वरयेव धूर्ताः ॥ ४० ॥

पुनश्च ताम्बूल करङ्कहस्ता ।
मधूनि पेयानि समर्पयन्ती ॥
ताम्बूल युग्मेन पुनः करेण ।
कविद्वयीमुल्लसितां चकार ॥ ४१ ॥

स्रवद् रसानां वचसां विधात्री ।
सुरम्यगात्री पुनरप्युवाच ।।
सम्प्रार्थितोन्दोर्गुण वर्णनाय ।
कामोल्लसन्मत्त चकोरनेत्री ।। ४२ ।।

प्राणेश ! दीर्घात् समयाद् विमुक्ताम् ।
निजप्रियां पूर्व-दिशां प्रसाद्य ।।
कृतानुलेपां विविधाङ्गरागैः ।
आलिङ्गयन् तां परिचुम्बतीन्दुः ।। ४३ ।।

अनन्तरं सर्वदिगङ्गनानाम् ।
प्रताडितस्तत्कुटिलैः कटाक्षैः ।।
प्रवर्तयन् काम-महोत्सवाय ।
करोति कान्तानि करैर्मुखानि ।। ४४ ।।

आकाश-राष्ट्रे जगतां नमस्ये ।
सिंहासने स्वे किल राजमानः ।
असंख्य नक्षत्र गणाऽभिनन्द्यः ।
विभर्त्ति सत्तां जनता प्रदत्ताम् ।। ४५ ।।

हिरण्यगर्भो नितरामुदारैः ।
गुणैः प्रसन्नोऽखिल सर्ग-रम्यैः ।।
अस्मै प्रसूताऽमृत निर्भराय ।
पूर्णाऽधिपत्यं प्रददौ द्विजानाम् ।। ४६ ।।

अत्रेरपत्यम् द्विजराजता च ।
कला निधित्वञ्च सुधाकरत्वम् ।।
चूडामणित्वम् त्रिपुरारि मूर्ध्नि ।
अहो महाभाग्य परम्पराऽस्य ।। ४७ ।।

अनन्त तारा कृत काम केलिः ।
सन्तोषितानेकवधू-प्रपञ्चः ।।
सुरै र्निपीताऽमृत तत्वसारः ।
क्षीणत्वमङ्गेऽतितरां बिभर्ति ।। ४८ ।।

प्रकाश मायाऽञ्चित पूर्णिमायाम् ।
प्रकाममुन्निद्र-समुद्र-मुद्रः ।।
ऊर्ध्वोच्छलच्चारु महाम्बुराशिम् ।
प्रवर्द्धयत्यालयमम्बुराशिम् ।। ४९ ।।

भवत्पितुः प्राप्त महाविभूतिः ।
भूत्यङ्गरागस्य शिरो विभूषा ।।
भूषा विचित्राऽखिल कामिनीनाम् ।
मीनाङ्ककेतोरयमेक-मित्रः ।। ५० ।।

कपोल गौरे वितनूरपि स्वैः ।
एतत्प्रकाशे कल-कामिनीनाम् ।।
कामार्दितानां सुषमाऽन्वितानाम् ।
प्रबाधते तीक्ष्णशरैः शरीरम् ।। ५१ ।।

कृत-त्रिलोकी विजयाऽभिमानः ।
वरोद्धतो ब्रह्म-महेश्वराभ्याम् ।।
लङ्केश्वरोऽयम् सममप्सरोभिः ।
अस्मिन् वितेने कल-काम-केलीः ।। ५२ ।।

तद् व्याप्रियेताम् नयनाञ्चले स्वे ।
सन्तृप्ति-लाभाय, सुधाकरेऽस्मिन् ।।
कामोद्धतानां सुर-सुन्दरीणाम् ।
प्रियङ्करे काम-महोत्सवेषु ।। ५३ ।।

अवेहि तत्कज्जलमेव कान्त !
अन्तर्गतं श्यामलमङ्कमस्य ॥
प्र-चुम्बनैः खञ्जन-गञ्जनानाम् ।
विलासिनीनाम् कल-लोचनानाम् ॥ ५४ ॥

यद्वा रतेर्भोग विलास-योग्ये ।
सु-शायितायाः खलु मण्डलेऽस्य ॥
प्रासाद तुल्ये मदन प्रियेण ।
जानीहि कृष्णान् खलु केशपाशान् ॥ ५५ ॥

नमन्ति बद्धाञ्जलयस्तथैनम् ।
सौभाग्य लाभाय भृशं धृताशाः ॥
शृङ्गार भारोल्लसदङ्गशोभाः ।
कान्ताः स्मरोद्दीपन-कार्य-कान्तम् ॥ ५६ ॥

पुनश्च शुद्धान्तपुरश्चरीणाम् ।
प्र-कम्पनी; सत्वरमाजगाम ॥
सौवर्ण-पात्राञ्चित चारु हस्ता ।
चन्द्रातपे भोजयितुं कवीन्द्रौ ॥ ५७ ॥

माधुर्य-लावण्य-समन्वितानि ।
भोज्यानि लेह्यानि रसप्रदानि ॥
चोष्याणि पेयानि च भोजनानि ।
क्रमाऽनुसारं परिवेषितानि ॥ ५८ ॥

परस्परं बद्ध महाऽनुरागौ ।
सा प्रेयसी तत्प्रणयी प्रियश्च ॥
सन्तुष्टचित्तौ सह-भोजनेन ।
चित्रा-शशाङ्काविव संव्यभाताम् ॥ ५९ ॥

तत्राऽश्रावि सुमन्थरं परिनदन् प्रस्वाप-संसूचकः ।
कर्णाऽऽनन्द विधायकश्च सततं शुद्धान्त-वाद्यध्वनिः ।।
ताम्बूलैरनुरञ्जिताऽधरतटप्रान्तावुभौ दम्पती ।
सं वेशाय लसद्-विलास-भवन-प्रान्तं समुज्जग्मतुः ।। ६० ।।

।। कर्ण-कान्दर्पिकन्नामाष्टमः सर्गः समाप्तः ।।



॥ श्रीः ॥

# सौर-कौन्तेयत्वन्नाम नवमः सर्गः

अथ "पाण्डु-सुताः" सर्वे ।
वसन्तः पृथया सह ॥
धृतराष्ट्र-सुरक्षाया ।
मभवन् युव-सत्तमाः ॥ १ ॥

भीमसेनोऽन्तरम् लब्धा ।
धार्तराष्ट्रान् यदा कदा ॥
निवारितोऽपि कुन्त्याऽसौ ।
बाधयामास निर्घृणम् ॥ २ ॥

सुयोधनः कुरु-ज्येष्ठः ।
कूट नीति-विशारदः ॥
गर-दानादिना चैवम् ।
मारणायोद्यतोऽभवत् ॥ ३ ॥

पित्रा प्रवासयामास ।
संकुचन् वारणावते ॥
सःमात्रा सहितान् सर्वान् ।
पाण्डवान् हस्तिनापुरात् ॥ ४ ॥

शकुनेर्मतमाश्रित्य ।
तदेकस्य वशंवदः ॥
तमेव देवतां मत्वा ।
द्यूत-कापट्य-कोविदम् ॥ ५ ॥

वारितोऽप्यङ्गराजेन ।
सर्वम् तस्मात्परोक्षयन् ।।
अमन्यताऽसौ श्री-मामम् ।
सर्वकाल-हितैषिणम् ।। ६ ।।

तत्र लाक्षा-गृहं रम्यम् ।
निवासार्थमकारयत् ।।
पुरोचनं पुरस्कृत्य ।
वन्हि-दाहमकल्पयत् ।। ७ ।।

देशे सर्वत्र वार्तेयम् ।
प्रसृता वायुवेगवत् ।।
"प्रदग्धाः पाण्डवाः सर्वे ।
स्व जनन्या सहेति च ।। ८ ।।

भगवानपि-श्री कृष्णः ।
सर्वं जानँश्च सर्वविद् ।।
जलाञ्जलिं ददौ तेभ्यः ।
भीष्मश्च चिन्तितोऽभवत् ।। ९ ।।

दैव योगेन ते किन्तु ।
विदुरेण सुरक्षिताः ।।
'पुरोचना'द्याः दग्धाश्च ।
नेदं वेदेतरो जनः ।। १० ।।

श्री-कृष्ण-गमनात्पूर्वम् ।
भीम कर्मा वृकोदरः ।।
सर्वान्निःसार्य यत्नेन ।
एकचक्रां पुरीं ययौ ।। ११ ।।

सुयोधनाद्याः सर्वे ते ।
भ्रातरः परमां मुदम् ॥
धारयन्तः शकुनिना ।
न्यवसन् हस्तिनापुरे ॥ १२ ॥

सु महानपि दुष्टाऽऽत्मा ।
नाऽपकर्तुं किलाऽर्हति ॥
येषां संरक्षकः साक्षात् ।
भगवानिति निश्चितम् ॥ १३ ॥

किन्त्वेषा योजना सर्वा ।
न ज्ञाता सूर्य-सूनुना ॥
शकुनिं धार्तराष्ट्रांश्च ।
दुर्विचारानशिक्षयत् ॥ १४ ॥

"वीराणाञ्च वधः सम्यक् ।
संग्रामे एव शोभते ॥
नैवम् कपट-जालेन ।
निन्दितेन च सज्जनैः ॥ १५ ॥

दुर्योधन ! तव श्रद्धा ।
गदायां नाऽस्ति तादृशी ॥
गदा-युद्धैक वीरस्य ।
मातुले चाऽस्ति यादृशी ॥ १६ ॥

स्वाऽनुजञ्च नियोज्याऽसौ ।
यथेच्छा दान-कर्मणि ॥
दारिद्र्यं द्रावयामास ।
निर्धनानाञ्च भारते ॥ १७ ॥

राधामधिरथञ्चैव ।
सर्वतः प्रथमं मुदा ॥
प्रणनाम सदा प्रातः ।
"त्रि-वर्गम्" सिषिवे सदा ॥ १८ ॥

महर्षिभ्यश्च विद्वद्भ्यः ।
शुश्रुवे रुचिराः कथाः ॥
विप्राँश्च भोजयामास ।
मोदकान् पायसानि च ॥ १९ ॥

बालान् वृद्धननाथाँश्च ।
अबलाश्चाऽतिथीनपि ॥
प्रत्यहं तर्पयाञ्चक्रे ।
घृताऽऽक्तैश्चैव भोजनैः ॥ २० ॥

धेनूनां बलिवर्दानाम् ।
वत्सानां चैव रक्षणे ॥
विदुषाञ्चैव सत्कारे ।
नानोपायानदर्शयत् ॥ २१ ॥

ज्वलन्तो यज्ञशालासु ।
प्रसन्नाः हव्य-पायसैः ॥
तेजः प्रवर्द्धयामासुः ।
राधेयस्याऽस्य वन्हयः ॥ २२ ॥

वेदानां मन्त्रपाठेन ।
पवित्रं राज-मन्दिरम् ॥
शुशुभे स्वर्ग-संकाशम् ।
सर्व-सम्पन्मनोहरम् ॥ २३ ॥

प्रत्यहम् देव नद्याश्च ।
कण्ठदघ्नेऽति निर्मले ।।
वैदिकैर्वारुणैर्मन्त्रै- ।
रसौ स्नानमचीकरत् ।। २४ ।।

अष्टाऽङ्गाऽर्घ्य-प्रदानेन ।
धूपैर्माल्यैश्च दीपकैः ।।
नीराजनाभिरत्यर्थम् ।
पूजयामास "भास्करम् ।। २५ ।।

सूर्योपस्थान काले च ।
प्राप्तानां विविधार्ऽथिनाम् ।।
प्रत्याशाः पूरयामास ।
यथेच्छम् स्वःसरित्तटे ।। २६ ।।

अन्नसत्राणि भूयान्सि ।
ग्रामे ग्रामे महामनाः ।।
सञ्चालयँश्च सर्वत्र ।
'सर्वोदय'-परो बभौ ।। २७ ।।

दलितानां समुन्नत्यै ।
निर्ममे परियोजनाः ।।
प्राधान्यञ्चाऽभवद्देशे ।
संस्कृतेः संस्कृतस्य च ।। २८ ।।

सत्सु चाऽप्यतिरिक्तेषु ।
पृथिव्यां बहुराजसु ।।
"दान-वीरे"ति शव्देन ।
तमेवैकम् विदुर्जनाः ।। २९ ।।

"जयोऽस्तु दानवीरस्य ।
"कर्ण" स्यति" निरन्तरम् ॥
चतुः समुद्र-मुद्रायां ।
पृथिव्यां शुश्रुवे ध्वनिः ॥ ३० ॥

जयोद्घोषो वरिष्ठस्य ।
कौन्तेयस्य महात्मनः ॥
सप्त-सप्तेश्च सप्तीनाम् ।
कर्ण-स्पर्शमथाऽकरोत् ॥ ३१ ॥

द्यु-मणिश्च यदाऽपश्यत् ।
रथ्यान् स्वानतिचञ्चलान् ॥
वि-मार्ग माश्रितान् सर्वान् ।
"अरुणस्या"ऽवशं गतान् ॥ ३२ ॥

उवाच क्षिप्रमुष्णांशुः ।
अनूरुं चल विग्रहम् ॥
"आकृष्य रश्मीनश्वानाम् ।
स्थाप्यतामिति मे रथः" ॥ ३३ ॥

तथाऽऽशु विहिते तेन ।
प्रपश्यन् तनुजं स्वकम् ॥
कवचं कुण्डले चाऽपि ।
बिभ्रतं गगने स्थितः ॥ ३४ ॥

सोऽपि स्वस्य समाराध्यं ।
देवं दृष्ट्वा तदुन्मुखः ॥
प्रणनाम भृशं प्रीतः ।
पद्माऽऽस्यः पद्मिनी-प्रभुम् ॥ ३५ ॥

स्व-पुत्रायाऽऽशिषो दत्त्वा ।
वचनैरमृतोपमैः ।।
उवाच परम-प्रीतः ।
तदेकश्रव्य-भारतीम् ।। ३६ ।।

वीर ! त्वमात्मजो नूनम् ।
मम कुन्त्याश्च वास्तवः ।।
राधा चाधिरथ श्चाऽयम् ।
पितरौ तव पोषकौ ।। ३७ ।।

कवचं कुण्डले ते च ।
जन्मजानीति मन्यताम् ।।
आत्मानं सर्वदा सर्वैः ।
अजेयमपि मन्यताम् ।। ३८ ।।

पारोक्ष्येण मया प्रत्तम् ।
पुत्र ! तुभ्यम् प्रशिक्षणम् ।।
सर्वाऽति गञ्च युद्धेषु ।
तेजश्चेति विभाव्यताम् ।। ३९ ।।

दानवीर ! तवौदार्यम् ।
पश्यतेदम् विबोध्यसे ।।
कर्णाभ्याम् श्रूयतां कर्ण ! ।
तवैव हितमुच्यते ।। ४० ।।

एकदा सः स्व-पुत्रस्य ।
प्राण-त्राणाय वासवः ।।
आगमिष्यति ते पार्श्वम् ।
भिक्षायै कृष्ण-प्रेरितः ।। ४१ ।।

'महाभारत' संग्रामे ।
भविष्यति, भयङ्करे ॥
तस्मै नैव प्रदेयानि ।
कुण्डले कवचं तथा ॥ ४२ ॥

भृशं लालप्यमानेऽपि ।
महेन्द्रे भिक्षुतां गते ॥
न देयानि न देयानि ।
न देयानीति मन्यताम् ॥ ४३ ॥

इत्युक्त्वा पुष्पितां वाचम् ।
अरुणाय न्यदेशयत् ॥
अग्रे प्रेरयितुञ्चैतान् ।
हरिताश्वान् "हरित्पतिः" ॥ ४४ ॥

श्रुत्वैतत्सकलं कर्णः ।
तेजसां प्रभुणोदितम् ॥
तं च भूयो नमस्कृत्य ।
चिन्तयामास मानसे ॥ ४५ ॥

कवचेन कुण्डलाभ्याञ्च ।
युक्तता मम शाश्वती ॥
शत्रुञ्जयस्य मे भ्रातुः ।
हीनत्वम् तैश्च निश्चितम् ॥ ४६ ॥

वैषम्येन किलाऽनेन ।
सन्दिग्धं मां स्व-जन्मनि ॥
लोकोक्तिः, सान्त्वयामास ।
सूर्य-साम्याऽनुमानिनी ॥ ४७ ॥

मम पादाऽङ्गुलीसाम्यम् ।
"पृथायाः" अङ्गलीषु च ॥
मनुष्याः प्रवदन्ति स्म ।
युधिष्ठिर-मताऽनुगाः ॥ ४८ ॥

तदद्य रवि-पुत्रत्वम् ।
पृथा-पुत्रत्वमित्युभे ॥
मम सु-स्पष्टतां नीते ।
जगन्नेत्रेण भानुना ॥ ४६ ॥

आस्तां तावदुपाख्यानम् ।
जनानां चोच्चनीचता ॥
पौरुषन्तु मदायत्तम् ।
जगदाश्चर्य कारकम् ॥ ५० ॥

भवन्ति मलिनात्पङ्कात् ।
सरोजानि जगत्तले ॥
स्व-गुणैः पूज्यतां यान्ति ।
लभन्ते च समादरम् ॥ ५१ ॥

क्षेत्रे साधारणे "सीता" ।
समुत्पन्ना महासती ॥
प्रासादोत्पन्न-नारीभ्यः ।
लभतेऽत्यन्त-पूज्यताम् ॥ ५२ ॥

कुम्भ-योनि स्तथाऽगस्त्यः ।
चुलुकी कृत्य, सागरम् ॥
देवाऽसुर-नराणाञ्च ।
पूज्यो नभसि राजते ॥ ५३ ॥

वानराणां कुले जातो ।
भगवान् "हनुमान्" सदा ॥
मुष्ठि-तर्जित-लङ्केशो ।
रामेणाऽपि प्रशस्यते ॥ ५४ ॥

कुलाऽभिमानिनां राज्ञां ।
नीचोच्चादिभिदा दृशाम् ॥
शिरांसि पातयिष्यामि ।
धनुर्मुक्तैर्महेषुभिः ॥ ५५ ॥

दलितानुद्धरिष्यामि ।
पङ्कजानीव भानुमान् ॥
शिरसा श्लाघयिष्यामि ।
क्षीणमिन्दुमिवेश्वरः ॥ ५६ ॥

मदोद्धतान् वृथोद्घोषान् ।
गर्जतश्च तरङ्गितान् ॥
नृपान् शुष्कान् करिष्यामि ।
'अगस्त्यः' सागरानिव ॥ ५७ ॥

निश्चितं सूर्यपुत्रत्वम् ।
क्षत्रियत्वम् सुनिश्चितम् ॥
राजत्वञ्च वदान्यत्वम् ।
वीरत्वम् निश्चितं मम ॥ ५८ ॥

धनुष्टंकार मात्रेण ।
रणं त्यक्त्वा विरोधिनाम् ॥
मृगाणां सिंह भीत्येव ।
निश्चितञ्च पलायनम् ॥ ५९ ॥

अन्यायैः कौरवीयैश्च ।
मम नाऽस्ति प्रयोजनम् ॥
युद्धेऽवश्यम् करिष्यामि ।
कौरवेन्द्रस्य रक्षणम् ॥ ६० ॥

देवाः स्युरसुराः स्युर्वा ।
गन्धर्वाश्चाऽपिः मानवाः ॥
तान् सर्वान् विहनिष्यामि ।
दावाग्निरिव वृक्षकान् ॥ ६१ ॥

चिन्तयन् स्व मनस्येवम् ।
अङ्गदेश-महाप्रभुः ॥
रथमारुह्य दिव्यात्मा ।
प्रासादाऽभिमुखं ययौ ॥ ६२ ॥

ततः समुत्तीर्य विचित्र-चित्राः ।
कक्षाश्चतस्रः प्रचलन् क्रमेण ॥
सम्प्राप्तवान् पञ्चम-भूमि-पृष्ठे ।
स्वर्गायितं कक्षमसौ वृषाल्याः ॥ ६३ ॥

तत्राऽङ्गराज्ञ्या कृत चारुचर्चः ।
प्रवर्णयन्नद्यतनं कथांशम् ॥
पाक-प्रशस्त-प्रमदाऽऽहृतानि ।
मध्यान्ह-भोज्यान्युररी चकार ॥ ६४ ॥

एवम् पूज्यतमो मनान्सि जगतां कर्षन् गुणानां गणैः ।
भोगाँश्चाऽपि विभावयन्ननुदिनं देवाऽसुरैर्दुर्लभान् ॥
दानैश्चाऽपि यथेप्सितैस्त्रिजगतामुन्मूलयन् दीनताम् ।
सर्व-श्लाघित पौरुषो रवि-सुतो मित्रांशुदीप्तिर्बभौ ॥ ६५ ॥

॥ कर्ण-सौर-कौन्तेयत्वन्नाम नवम-सर्गः समाप्तः ॥

---

॥ श्रीः ॥

# पाञ्चालिकन्नाम दशमः सर्गः

पञ्चाल नाम्ना प्रथितं प्रदेशम् ।
प्रशास्यमानं द्रुपदेनराज्ञा ॥
यज्ञात्समुत्पन्नमपत्य-युग्मम् ।
प्रख्यापयामास निजैः प्रभावैः ॥ १ ॥

एकः पुमानन्यतरा च कन्या ।
पञ्चाल-राजस्य यशोवितानैः ॥
अयोनिजं दिव्यवपुर्भविष्णु ।
तत्राऽति तेजस्वितया प्रसिद्धम् ॥ २ ॥

सः धृष्टपूर्वम् किल नामधेयम् ।
द्युम्नोत्तरं चारु तरं बिभर्ति ॥
सा द्रौपदीति प्रथितां समाख्याम् ।
सुविभ्रती श्रेष्ठ गुणा रराज ॥ ३ ॥

चलत्तरङ्गाऽञ्चित केशपाशा ।
प्रसन्न वक्त्राऽति विशाल नेत्रा ॥
नीलोत्पल श्यामल गात्रकान्तिः ।
सा यौवनारम्भमथ प्रपेदे ॥ ४ ॥

विज्ञापितोऽन्तःपुरगस्तदानीम् ।
एकान्ततः स्वीय महामहिष्या ॥
स्वयंवराय द्रुपदः कुमार्याः ।
आमन्त्रयामास नृपान् समग्रान् ॥ ५ ॥

यो मत्स्यवेधी सुतरामपश्यन् ।
छायां तदीयां खलु किन्तु पश्यन् ॥
विद्धं करिष्यत्यचिरं शरेण ।
सः पार्षतीं लप्स्यति सादरञ्च ॥ ६ ॥

श्रुत्वैवमुद्घोषमलङ्कृताङ्गाः ।
पञ्चाल कन्योपरिदत्तनेत्राः ॥
नृपाः धनुर्वेद विशारदास्ते ।
क्षिप्रं समाजग्मुरिमं प्रदेशम् ॥ ७ ॥

सुयोधनश्चाऽपि महाप्रसन्नः ।
तद् "याज्ञसेनी-" गुण कृष्ट चक्षुः ॥
कर्णस्य विश्वैक धनुर्धरस्य ।
प्रासाद-मध्ये प्रविवेश कक्षम् ॥ ८ ॥

ददर्श मञ्चे सुतरां वृषाली- ।
मञ्चन्तमन्तर्विविधैर्विलासैः ॥
"कर्णम्" विकर्णोऽनुगतो वचोभिः ।
सुपेशलैर्गन्तुमिमं जगाद ॥ ९ ॥

भ्रातः ! करोति द्रुपदः सुतायाः ।
सीमान्त-सौन्दर्य गुणैः श्रुतायाः ॥
स्वयम्बरं वेध्य विचित्र मत्स्यम् ।
तदाऽऽशु सज्जीभव तत्र गन्तुम् ॥ १० ॥

श्रुत्वैव पञ्चाल पुराऽभियाने ।
कृतत्वरं चञ्चलतामुपेतम् ॥
एतत्फल प्राप्तिमवीक्षमाणम् ।
उवाच तं कुण्डल-मण्डितास्यः ॥ ११ ॥

अस्त्येव तन्, नास्ति परं मदिच्छा ।
सम्पन्न पाणि-ग्रहणोत्सवस्य ।।
लब्धेऽद्वितीयेऽपि कलत्र रत्ने ।
दारान्तरेच्छा नितरामरम्या ।। १२ ।।

तद् याहि वीर-प्रवर ! त्वमेव ।
स्वयम्वरोत्साह-विवर्द्धनाय ।।
पाञ्चाल-पुत्री समलंकृताङ्गी ।
त्वामेव भोगैः समलङ्करोतु ।। १३ ।।

सम्बिद्ध मत्स्यं सुतरां भवन्तम् ।
विभूषयन्ती वर माल्य गन्धैः ।।
आलिङ्गनेच्छुः सुतरां विधत्ताम् ।
प्रदत्त-मुद्रं भवदीय वक्षः ।। १४ ।।

पुनः स्वकीयैर्नयन-प्रदीपैः ।
नीराजतां स्नेह-युतैर्भवन्तम् ।।
तरङ्गिकेशान्त लसन्मुखेन्दुः ।
सम्पाय्यतां स्वं मधुराऽधरान्तम् ।। १५ ।।

पुनर्लभस्वोत्पल कोमलङ्गयाः ।
निशान्त सम्प्राप्त-भुजोपधानः ।।
तुङ्ग स्तनोन्मर्दन-संयुतानि ।
शय्या सु-सम्भोग-महासुखानि ।। १६ ।।

वचोभिरेभी रचना ललामैः ।
प्रियां प्रियैर्हास्य-परांचकार ।।
हसन् वयस्यश्च सुयोधनोऽपि ।
प्रोवाच तम् चापभृतां नमस्यम् ।। १७ ।।

राजन् ! प्रणामैरनुरोधयामि ।
पञ्चाल-राजस्य पुरं प्रयातुम् ।।
दिदृक्षयैव प्रबलां नृपाणाम् ।
समागतानां समितिं मनोज्ञाम् ।। १८ ।।

तदाशु संरक्ष यशः कुरूणाम् ।
दिगन्त-गामि प्रतिवाद-शून्यम् ।।
प्रयोजनानामपि हीनतायाम् ।
दिदृक्षवो वीर-वराः व्रजन्ति ।। १९ ।।

कान्ता मुखेन्दुं परिवीक्षमाणः ।
तद् भ्रू-विलासेन कृताऽभ्यनुज्ञः ।।
कुर्वन् कृतार्थम् युव-राजमेनम् ।
ओमित्युवाच प्रहसन् समक्षम् ।। २० ।।

देशाद्विदेशात् प्रबलाः नरेन्द्राः ।
जरा सुताद्याः शिशुपाल मुख्याः ।।
सुयोधनो भ्रातृ-युतश्च, कर्णः ।
कृष्णश्च काम्पिल्य-पुरं प्रपेदुः ।। २१ ।।

स्वयम्वरा योजनमुन्निशम्य ।
कुन्ती-युताः पाण्डु सुतास्तदानीम् ।।
आजग्मुरेवं मुनिवेषवन्तः ।
जटा-कलापैर्नितरां लसन्तः ।। २२ ।।

सुयोधनाद्यैः प्रतिषेधितोऽपि ।
समुन्नतं कन्स-वधेन कर्णः ।।
कृष्णं दिदृक्षुः किल दैवयोगात् ।
तदीयमावास-गृहं जगाम ।। २३ ।।

अन्योऽन्य-सम्बन्ध-रहस्य-विज्ञौ ।
गुप्तेन रूपेण च संल्लपन्तौ ।।
परस्परं दर्शन-सुप्रसन्नौ ।
प्रचक्रतुर्गोप्यतमां च वार्ताम् ।। २४ ।।

धृतोच्चवस्त्राः दिवसे परस्मिन् ।
कल्प-द्रुमाः मण्डपनन्दनस्य ।।
सिंहासने स्वे सुतरां विरेजुः ।
राजन्य-वर्याः कृत सत्सपर्याः ।। २५ ।।

एकत्र भागे खलु मण्डपस्य ।
मञ्चेषु नेपथ्य-परिष्कृतेषु ।।
पुरन्ध्रिवर्गेषु समुल्लत्सु ।
पञ्चाल भू-नन्दन कल्पवल्ली ।। २६ ।।

ततः सुवर्णाऽङ्गुलिना करेण ।
विनिर्दिशन् यन्त्रितवेध्यमत्स्यम् ।।
धनुर्विशालं निशिताँश्च बाणान् ।
पञ्चाल पुत्रोनृपतीनुवाच ।। २७ ।।

यः कोऽपि वीरो भवतामपश्यन् ।
करिष्यतीमं खलु मत्स्यवेधम् ।।
तं याज्ञसेनी भगिनी मदीया ।
वरिष्यति प्रेमपराऽचिरेण ।। २८ ।।

सर्वेषु वै निष्फलतां गतेषु ।
नृपेषु गर्जन् मगधस्य राजा ।।
उत्तोलयन् पूजित चारुचापं ।
सभाङ्गणे शीघ्रतरं पपात ।। २९ ।।

महाबलश्चेदिपतिः पुनस्तत् ।
कुर्वन्नधिज्यम् शिशुपालनामा ।।
निपीडितं चापतले शरीरम् ।
बभूव नालं परिरक्षितुं स्वम् ।। ३० ।।

सुयोधनश्चाऽप्यकरोदधिज्यम् ।
उद्दिश्य मत्स्यं परितोभ्रमन्तम् ।।
मुञ्चन्नति श्रेष्ठतरं शरं तम् ।
न प्राप्तवान् लक्ष्यभिदां प्रतिष्ठाम् ।। ३१ ।।

सर्वेषु भूभृत्सु नताऽऽननेषु ।
कृताट्टहासः किल सूर्य सूनुः ।।
समस्त राजन्य-महाभुजानाम् ।
निपीत-शक्त्येव धृतोरु भारम् ।। ३२ ।।

उत्थाप्य चापं सहसा त्रिकृत्वः ।
चिक्षेप हस्तेन भृशं ख-मध्ये ।।
सज्ये कृते तत्र च "सूचिवाणम्" ।
सन्धाय, मत्स्यं तरसा विवेध ।। ३३ ।।

उच्छिन्नयन्त्रे पतिते च लक्ष्ये ।
समागते सूचिमुखे शरेऽस्मिन् ।।
जयध्वनिः प्रोच्चरितो नृपाणाम् ।
दृष्टिश्च "कर्णे" खलु केन्द्रिताऽभूत् ।। ३४ ।।

पञ्चालपुत्र्याः रमणीय हस्ते ।
विलम्बिनी पाटल-पुष्पमाला ।।
सु-सन्दिहानेव वसोर्नृपत्वे ।
वध्वा समं म्लान-मुखी बभूव ।। ३५ ।।

मात्यार्पणे तत्र पतिम्वरा सा ।
जिताऽपि कर्णेन विचक्षणेन ।।
संवीक्ष्य पञ्चाल-नृपैर्विरोधम् ।
स्पुटामनिच्छां प्रकटीचकार ।। ३६ ।।

अनन्तरं तत्र पुनः सुसज्जे ।
मत्स्यान्तरे "बिप्र-बरेण" विद्धे ।।
स्पष्टी कृते तत्र तथाऽर्जुनत्वे ।
पाञ्चालिका तं वरयाम्बभूव ।। ३७ ।।

दग्धानपीमान् कपटेन पार्थान् ।
सुजीवितान् वीक्ष्य कृपालु-"कृष्णः" ।।
अन्ये नरेन्द्राश्च ययुर्गृहाणि ।
तत्रैव चासन् खलु कौरवास्ते ।। ३८ ।।

तान् पाण्डवान् वीक्ष्य सुयोधनोऽयम् ।
षड्यन्त्र-नैष्फल्य-विवृद्ध-मन्युः ।।
द्रौपद्यनौचित्य-धृतोरुतापः ।
पञ्चालपैर्युद्ध-समुद्यतोऽभूत् ।। ३९ ।।

मतङ्गजैश्चैव मद प्रमत्तैः ।
अश्वैः रथैश्चातितराम संख्यै ।।
पदातिभिः प्राप्त जयैश्च संख्ये ।
पञ्चाल राज्यं व्यथितं चकार ।। ४० ।।

दृष्ट्वा विषण्णो द्रुपदः प्रकामम् ।
रणोद्यमं क्रोधित कौरवाणाम् ।।
प्रत्यर्थि वर्गाऽति भयङ्कराणाम् ।
लोकेषु सर्वेष्वपि भैरवाणाम् ।। ४१ ।।

स्व-सैन्यमादाय च भीषणं सः ।
शस्त्राऽस्त्र सज्जं प्रययौ रणाय ॥
"धृष्टा" दिभिः सार्द्धमसौ स्वपुत्रैः ।
रुरोध शत्रून् सहसा बलेन ॥ ४२ ॥

परन्तु कर्णान्ति विकृष्यमाण- ।
धनुर्विमुक्तै श्च सुवर्ण पुङ्खैः ॥
"कर्णस्य" बाणैः पीरताडितं तत् ।
पञ्चाल-सैन्यम् विमुखी वभूव ॥ ४३ ॥

जिह्माऽऽशुगैस्तस्य धनुर्विमुक्तैः ।
प्राणान्तकैस्तद् द्विषतां रणेषु ॥
छिद्यत्तनुत्राण-निपीडिताङ्गाः ।
पञ्चाल-भूपाः विपदं प्रपेदुः ॥ ४४ ॥

द्रुतं द्रुत-"द्रुः" परिशान्त "धृष्टः" ।
आक्रान्त भीमो व्यथितार्जुन श्च ॥
स्वयपम्वरा कज्जलिताऽश्रुवर्षैः ।
शान्तोऽभवत्कर्ण-महादवाग्निः ॥ ४५ ॥

आदाय सर्वानपि कौरवान्सः ।
प्रत्यागमद् हस्ति-पुरं प्रशस्तम् ॥
लोके तदीयोरुजयोच्चघोषः ।
व्याप्ति जगामाऽऽशुतरां नवीनाम् ॥ ४६ ॥

इतश्च ते पाण्डु-सुताः कियन्ति ।
दिनानि विश्रान्तिमवाप्नुवन्तः ॥
मात्रा समं; तत्समनुज्ञयैव ।
पञ्चाऽपि कृष्णा-पतयो बभूवुः ॥ ४७ ॥

पञ्चाल-राजाऽऽकलित प्रतिष्ठाः ।
सम्मानिता स्तत्र महोपहारैः ।।
सप्ताऽपि ते वै कुरु-राजधान्याम् ।
प्रासाद-मध्ये विविशुः सुखेन ।। ४८ ।।

पृथा-सुतानां परिरक्षितानाम् ।
विवाहितानां व्यवहार-तुष्टाः ।।
सर्वेऽपि पौराः परितोषमापुः ।
विसस्मरुः "पाण्डु" मिमे नरेन्द्रम् ।। ४९ ।।

पृथाऽपि षट् पुत्रवती निजान्त- ।
र्हृदंवहिः पञ्च-सुतैरुपास्या ।।
स्नुषा-समेता नृप मन्दिरे स्वे ।
विश्वासिताऽभूद् विदुरे नितान्तम् ।। ५० ।।

सर्वेऽपि ते ज्येष्ठ-युधिष्ठिरस्य ।
प्रवर्तमानाः अनुशासनेषु ।।
स्व-पैतृकं राज्यमुपासयन्तः ।
शनैश्च लोक-प्रियतामुपेयुः ।। ५१ ।।

गान्धारीं धृतराष्ट्रमुन्नमयितुं कुन्ती स्नुषा-संयुता ।
पुत्रैश्चैव युता तदीय भवनं प्रागात्प्रसन्ना सती ।।
पादाब्जान्यभिवाद्य तुष्ट मनसोर्लब्ध्वाऽऽशिषस्ते तयोः ।
भीष्म-द्रोण कृताशिषश्च सततं रेजुः स्वकीये पुरे ।। ५२ ।।

एतेषां धृतराष्ट्र-पाण्डुतनय स्व-स्वार्थ-युक्तं महत् ।
क्लिष्टम् कर्ण-कटु वृथा कलकलं "कर्णो"ऽप्यनाकर्णयन् ।।
निःसीम-द्रविण-प्रदान विगलद् दारिद्रयता-दुर्दिनो ।
सद्भिश्चाऽप्यभिनन्दितः प्रतिदिनं विक्रान्त-शक्तिर्बभौ ।। ५३ ।।

।। कर्ण-पाञ्चालिकन्नाम दशम-सर्गः समाप्तः ।।

---

॥ श्रीः ॥

# कालिङ्गकन्नामैकादशः सर्गः

पूर्वाऽञ्चले भा-रत-भारतस्य ।
भुवो दुकूले च समुद्र-कूले ॥
नानाऽद्रि तुङ्गश्च सुवर्ण-पिङ्गः ।
चकास्ति देशः सुतरां कलिङ्गः ॥ १ ॥

तस्मिन् प्रदेशे कमलोरुकान्तिः ।
भानु-प्रभा "भानुमती" प्रसिद्धा ॥
औदार्य-सौन्दर्य-गुणैर्ललामैः ।
रेजेऽति तत्रत्य-नरेन्द्र-पुत्री ॥ २ ॥

नवोद्गमं यौवन मुद्वहन्ती ।
कन्दर्प-बाण प्रसरस्य लक्ष्यम् ॥
रतेश्च साक्षात् प्रतिमा मनोज्ञा ।
सुयोधनेच्छा-विषयो बभूव ॥ ३ ॥

कलिङ्ग-भूभृत्परियोज्यमानम् ।
स्वयम्वराऽऽरम्भमसौ निशम्य ॥
कर्णस्य कर्णौ मृदुभिर्वचोभिः ।
विभूषयामास निशान्त-मध्ये ॥ ४ ॥

पुनर्भवन्तं विनिवेदयामि ।
कलिङ्गदेशाऽभिगमाय राजन् ॥
सम्मेलनं श्वो भविता नृपाणाम् ।
स्वयम्वरार्थम् समुपागतानाम् ॥ ५ ॥

सुयोध्यनेऽस्मिन् विरते निवेद्य ।
तत्राऽपि राज्ञां दमनं चिकीर्षुः ॥
तेनैव साकं सहसा यियासुः ।
विसज्जयामास रथाऽश्व नागान् ॥ ६ ॥

उपेत्य शुभ्रान् यशसा कलिङ्गान् ।
स्वयम्वरे भूमि-भृतो ददर्श ॥
जरा-सुतं तं शिशुपालमुग्रम् ।
शाल्वं, विदर्भेन्द्र-सुतं, स-शल्यम् ॥ ७ ॥

कलिङ्ग-शक्रेण निदेश्यमाने ।
मञ्चे सुतुङ्गेऽत्युपचार-युक्ते ॥
सिंहासनस्थौ सुतरां व्यभाताम् ।
द्वितीय-मित्रा-वरुणौ पृथिव्याः ॥ ८ ॥

ततो धरा-नन्दन-कल्पवल्ली ।
भूषाम्बरैः क्लृप्त शुभाङ्ग-सज्जा ॥
नृपात्मजा, सं कुलिता सखीभिः ।
स्वयम्वर-प्राङ्गण माविवेश ॥ ९ ॥

मधु-ध्वनि-ग्राममुपोद्गिरद्भिः ।
विभिन्न तूर्यैः सममाविशन्तीम् ॥
विमान संस्थां नरदेव कन्याम् ।
नृपाः सतृष्णां सुमुखीमपश्यन् ॥ १० ॥

बहून् नृपान् सा मनसा त्यजन्ती ।
अन्येषु नैच्छत्खलु दृष्टि-दानम् ॥
ज्ञात्वाऽपरेषु प्रचुरानभावान् ।
सा "मागधा"ऽऽसन्नमुपाजगाम ॥ ११ ॥

महाऽनुभावम् जगदेक वीरम् ।
राजन्य मौल्यर्चित पाद-पद्मम् ।।
तन्नाम धेयस्य "जरा"-युतत्वात् ।
नाऽनुग्रहेच्छामकरोदमुस्मिन् ।। १२ ।।

अनन्तरम् चेदि-धराऽधिपस्य ।
महाबलस्याऽपि दिगन्तकीर्तेः ।।
परं परेषां शिशुपालकत्वात् ।
चिरं न तस्थौ च समक्षमस्य ।। १३ ।।

"श्रीकृष्ण चन्द्र" द्विषतः सदैव ।
"शाल्वस्य" भाग्यम् प्रबलं न मेने ।।
उद्दाम कामोत्सव दीक्षितायाः ।
स्वस्याः कृपा-भाजनतां गृहीतुम् ।। १४ ।।

ततश्चतुस्रां शिविकां वहन्तः ।
विख्यात-सौन्दर्य गुणां कुमारीम् ।।
निन्युः समीपं किल "रुक्मिणो"ऽस्य ।
विचित्र रुक्माऽङ्गद-शोभितस्य ।। १५ ।।

विज्ञाय चैनम् निज-जन्म नैव ।
पितुर्विरोधाय कृत-प्रयत्नम् ।।
आसक्तमप्याऽऽशु विहाय चाग्रे ।
यानाय सङ्केतमसौ चकार ।। १६ ।।

"शाल्यस्य" मद्राऽधिपतेः समीपम् ।
जग्मुस्त्वरेणाऽति विमान-धुर्याः ।।
विचिन्त्य तं सज्जनतैक शल्यम् ।
दृशाऽपि नानुग्रह मा चकार ।। १७ ।।

पुनश्च तस्याश्छिविकाऽधरस्थाः ।
जनाः जनौघम् परिहार्य शीघ्रम् ।।
निदर्शयामासुरनन्य-तुल्यम् ।
नृपाऽग्रगण्यञ्च सुयोधनन्ते ।। १८ ।।

जगत्प्रसिद्धं कुरुवंश दीपम् ।
कर्णाऽनुगं, भ्रातृशताऽनुगम्यम् ।।
रतीश-कान्तं धृतनीति सारम् ।
अपश्यदग्रे धृतराष्ट्र-सूनुम् ।। १९ ।।

तत्रैव रुद्धादवत्तीर्य यानात् ।
सखी-प्रदत्तां वर-चारु मालाम् ।।
आसज्जयामास "वधूः" कराभ्याम् ।
सा कम्बुकण्ठेऽस्य सुयोधनस्य ।। २० ।।

ततः कलिङ्गाः सुतरां प्रसन्नाः ।
प्रहर्ष-वाद्यध्वनि-सङ्गतानि ।।
ववर्षु रुत्कृष्ट-सुगन्धितानि ।
पुष्पाणि रम्याणि तयोः शुभानि ।। २१ ।।

अनन्तरं भानुमती प्रसन्न- ।
कृपा कटाक्षैः परिवञ्चितास्ते ।।
चैद्यादयः क्रुद्धतमाः नृपेन्द्राः ।
युद्धोद्यमंचक्रुरनल्पसैन्याः ।। २२ ।।

संघर्षितौ वीक्ष्य तदा द्विषद्भिः ।
वधूवरौ किंशुकताम्रचक्षुः ।।
कर्णान्तमाकृष्ट धनुः स कर्णः ।
बिभेद सौन्यम् निशितैः शरोघैः ।। २३ ।।

विच्छिन्नगात्रानशनि-प्रहारैः ।
विक्लिन्न वस्त्रान् रुधिरोद्गमेन ॥
स-विद्युदग्न्यस्त्र विवर्षणेन ।
सः कर्ण-मेघो द्विषतोबबाध ॥ २४ ॥

पलायनं चक्रुरिमे विषण्णाः ।
ते चेदिपाद्याः सकलाः नरेन्द्राः ॥
रथे समारोह्य वधूं वरञ्च ।
वसुः सहर्षम् तमनुप्रतस्थे ॥ २५ ॥

एको जरासन्ध इति प्रसिद्धः ।
जनार्दनस्याऽपि परोविजेता ॥
तमन्वधावत् सहसा रथेन ।
समाह्वयन् द्वन्द्व-रणाय कर्णम् ॥ २६ ॥

भो सूत ! यद्यप्रतिमं भटं स्वम् ।
विमन्यसे तत्खलु गच्छमाऽग्रे ॥
मे द्वन्द्व-युद्धं प्रबलं प्रदेहि ।
मन्यस्व शीघ्रं निहतं रणे स्वम् ॥ २७ ॥

अत्युत्कटान्युत्कटुतां गतानि ।
श्रुत्वा वचांसि प्रखराणि तस्य ॥
तत्राऽवरुध्यैव च वाजिवर्यान् ।
प्रचक्रमे द्वन्द्व-रणाय तेन ॥ २८ ॥

गदा-प्रहारांश्चरतो विचित्रान् ।
भग्नाऽपतत्सा मगधेश्वरस्य ॥
पश्चात्प्रवृत्तम् किल बाहुयुद्धम् ।
सुराऽसुर-प्रेक्ष्यतमं विचित्रम् ॥ २९ ॥

तं मल्लयुद्धस्य कलास्वभिज्ञम् ।
वसुः समुत्थाप्य खलं कराभ्याम् ॥
विभ्रामितं खे सुचिरं जवेन ।
व्यपोथयत् प्राण-धरं धरायाम् ॥ ३० ॥

विचालयन्तम् नयने स्वकीये ।
समुत्थितं सन्मुखमापतन्तम् ॥
जानन्नपि प्राणहरं रहस्यम् ।
नैच्छत्तथा कर्तुमसौ कृपालुः ॥ ३१ ॥

प्रबाध्य चैनं "भुज कण्टकेन" ।
कला विशेषेण बुधः कालानाम् ॥
न्यपातयत्तं पुनरेव दोर्भ्याम् ।
किञ्चिद्विमूच्छा-ग्रसितं धराङ्के ॥ ३२ ॥

सम्प्राप्त संज्ञः सुचिरं कथञ्चित् ।
अवेक्षमाणः सदृशं वसूनाम् ॥
बद्धाञ्जलिस्तुष्टतमो निकामं ।
चकार सन्धिं वसुना प्रगाढम् ॥ ३३ ॥

स्वां "मालिनीम्" नाम पुरीं विशालाम् ।
शालां प्रपूर्णां, गज-वाजि-रत्नैः ॥
उपाहरत्तस्य च मागधोऽयम् ।
अयस्मयानि प्रचुरा युधानि ॥ ३४ ॥

प्रति प्रतस्थे सहितो द्वयेन ।
दाम्पत्य-दृष्ट्याऽऽदरिताऽद्वयेन ॥
सम्प्राप्त नाना मणिरत्नभारः ।
कर्णः समुल्लासितकर्णभारः ॥ ३५ ॥

सन्मानितो भीष्म पितामहाद्यैः ।
तद् राजधान्यां कुरुभिः समस्तैः ।।
प्रवेशयन् ताञ्च वधूं वरञ्च ।
स्वयं विवेशान्तरयं समृद्धम् ।। ३६ ।।

निर्वृत्त सम्पूर्ण विवाहदीक्षौ ।
तौ दम्पती काम-रसेऽरमेताम् ।।
सूर्यान्शुभिः संगमितौ स्मरार्तौ ।
नितान्त कान्ताविव चक्रवाकौ ।। ३७ ।।

"सु"ना विशिष्टां प्रथमां वयस्याम् ।
"प्रिया"-विशेष्यां वसवे प्रसन्ना ।।
व्याख्यामपि व्याकरणाऽञ्चिताख्याम् ।
ददौ "प्रियां" भानुमती सु-पूर्वाम् ।। ३८ ।।

सखीं द्वितीयामपि "मेघमालाम्" ।
कामाग्निशान्त्यै नव मेघमालाम् ।।
शत्रुञ्जयायाऽऽधिरथाय शीघ्रम् ।
प्रीत्यन्विता सम्प्रददे सहैव ।। ३९ ।।

ततस्तृतीयामपि "चित्र सेनाम्" ।
स्मरस्य सेनामिव सु प्रतीताम् ।।
ददौ "सु-सेनाय" महा प्रसन्ना ।
तामङ्गराज्ञ्याश्च सहोदराय ।। ४० ।।

दार-द्वयेऽप्यङ्ग धराऽधिपस्य ।
परस्पर प्राप्त सहोदरत्वे ।।
प्रीतिर्बभूवाऽतितरां प्रवृद्धा ।
समत्व-तत्वाः हि महाऽनुभावाः ।। ४१ ।।

कालक्रमेणोत्कमनीय कान्तिः ।
कृशाऽङ्गयष्टिः परिचञ्चलाक्षी ।।
श्यामीभवत्पीनतर-स्तनाऽग्रा ।
दधार गर्भम्प्रथमं वृषाली ।। ४२ ।।

भोज्येषु पानेषु रतेषु तस्याः ।
इच्छा-क्रमो ह्रस्वतरो बभूव ।।
वनावली-प्रान्त-विहार वाञ्छा ।
जगाम वृद्धिं परमां परन्तु ।। ४३ ।।

आभूषणैश्चाप्यनलङ्कृताङ्गी ।
शशाङ्कलेखेव भृशं कृशाङ्गी ।।
मृद्भक्षणं प्रत्युदिताऽभिलाषा ।
आसीत्सदा लावणिके धृताऽऽशा ।। ४४ ।।

निरीक्ष्य राधाऽधिरथौ किलेमाम् ।
विश्वासितौ वंश-विवर्द्धनाय ।।
भविष्णु-पौत्रानन दर्शनाय ।
आनर्चतुर्देववरानजस्रम् ।। ४५ ।।

श्रुत्वा कदाचित्समुपात्तगर्भाम् ।
"कुन्ती" वधूं हृष्ट तराबभूव ।।
आगत्य गुप्तं भवने तदीये ।
जगाद विश्वस्ततरैर्वचोभिः ।। ४६ ।।

आयुष्मति ! स्वस्तिमती भव त्वम् ।
शृणु, प्रबुद्धा वचनं मदीयम् ।।
भविष्यतो बालक-सत्तमस्य ।
"वृषाङ्कितं" नाम विधेयमस्य ।। ४७ ।।

वृषो हि धर्मः खलु सत्सुशोभि ।
नाम त्वदीयस्य शिशोस्तथाऽस्तु ।।
धर्मो हि विश्वस्य परा प्रतिष्ठा ।
धर्मेण-युक्ताः सुखिनः पुमान्सः ।। ४८ ।।

ततः "पृथायां" स्व-गृहं गतायाम् ।
एतद् रहस्यं सकलं विवित्सुः ।।
सामीप्यभाजा पतिना समस्तम् ।
विबोधितं गोपयितुं तदस्यै ।। ४९ ।।

यद्यच्च वस्त्वप्यभिलाषितं तत् ।
समाहृतं तद् ददृशे प्रियेण ।।
अधिज्य-चापस्य किलास्य नाऽभूत् ।
"असम्भवं" नाम च शब्दकोशे ।। ५० ।।

चिकित्सकाः स्वे विषयेऽति विज्ञाः ।
नियोजिताः श्रेष्ठतमाः प्रियेण ।।
चारित्र्य भाजां परिचारिकाणाम् ।
प्रिया-प्रियायाऽधिकृतः समूहः ।। ५१ ।।

सुमङ्गलीयम् सुषुवे "वृषाली" ।
नक्षत्र-दीप्ते ग्रह शस्यमाने ।।
दिने दिनेशाऽङ्गज-तुल्यवर्णम् ।
पुत्रं मनोज्ञाऽभ्युदयं प्रसन्ना ।। ५२ ।।

सत्तूर्य-शब्दश्च सुवाद्य घोषः ।
वराऽङ्गना-दर्शित चारुनृत्यः ।।
सुवर्ण-रत्नाऽञ्चित भूरिदानः ।
जन्मोत्सवो राज-कुले प्रवृत्तः ।। ५३ ।।

कृतं बुधैस्तस्य च नामधेयम् ।
प्रथाज्ञया मातृ-समान वर्णाम् ।।
ज्योतिर्विदा शुद्धि-युते मुहूर्ते ।
वृषेति पश्चाद् "वृष-सेन" विख्यम् ।। ५४ ।।

अशोक पत्राऽनुगताऽऽम्र मालाः ।
तमाल नीलाः रुचिराः सुपुष्पैः ।।
बबन्धिरेतज्जनता गृहाणाम् ।
द्वारेषु नारी-नर-संकुलेषु ।। ५५ ।।

पङ्क्तिश्चकाशे नितरां लसन्ती ।
जयोद्धतानामिव केतनानाम् ।।
द्वार प्रदेशोभय-पक्ष-कक्षा- ।
समुन्नतानां कदली-दलानाम् ।। ५६ ।।

गन्धार-राजः "शकुनि"श्च तत्र ।
विख्यात नामा किल कूटनीतौ ।।
शौर्ये रणे चाऽप्यनति-प्रगल्भः ।
मान्यः सदाऽभूत् किल कौरवाणाम् ।। ५७ ।।

सो धार्त राष्ट्रान् प्रबली चिकीर्षुः ।
मामेति सिद्धो "धृतराष्ट्र" बुद्धिम् ।।
बिभेदयामास पृथा-सुतेभ्यः ।
स्व-भागिनेयानभयान् विधातुम् ।। ५८ ।।

चकार बाध्यान् गमनाय पार्थान् ।
पुरं परित्यज्य, वहिः कथञ्चित् ।।
ज्येष्ठम् पितृव्यं सहसा निवेद्य ।
ते मातृ-पत्नी सहिताः प्रतस्थुः ।। ५९ ।।

ते खाण्डवं प्राप्य वनं तदानीम् ।
अति प्रसन्नाः "धृतराष्ट्र"-दिष्टम् ।।
दिष्टम् स्वकीयं स्वयमुन्नयन्तः ।
सर्वत्र भीमेन कृतव्यवस्थाः ।। ६० ।।

धर्मेण राज्यं किल केवलेन ।
चिकीर्षवस्ते विजने वनेऽस्मिन् ।।
प्रवर्तयामासुरनेक मार्गम् ।
"धर्मा"ऽऽज्ञया शाश्वत-राजनीतिम् ।। ६१ ।।

गान्धारस्य च कूटनीति-विषमां दुष्टां मतिं गर्हयन् ।
युद्धेष्वप्यपराजितं प्रति भटैः कुर्वंश्च दुर्योधनम् ।।
भुञ्जानः स्वबलार्जितान् प्रतिदिनम् भोगान्सुरै र्दुर्लभान् ।
लोकस्याऽस्य दरिद्रताञ्च दलयन् कर्णोऽयमुच्चैर्बभौ ।। ६२ ।।

।। कर्ण कालिङ्गिकंनामैकादश-सर्गः समाप्तः ।।



॥ श्रीः ॥

# राजसूयिकन्नाम द्वादशः सर्गः

विनय-नय-समेताः कृष्णचन्द्र-प्रसादात् ।
सततमनुसरन्तो "धर्मराजस्य" मन्त्रम् ॥
अभिनव-कृति-योगाः "भीमसेन" श्रमेण ।
सुर-पुरमिव रम्यम् निर्ममुः "प्रस्थमैन्द्रम् ॥ १ ॥

स्थल जल कृत साम्यम् भ्रान्तिदं भूरि-शिल्प- ।
प्रचुरतर कलाभिर्दानवेन्द्राऽऽदृताभिः ॥
रुचिर भवनमेकम् योजनार्थम् सभायाः ।
विविध-सुख-समेतं कारितं पाण्डु-पुत्रैः ॥ २ ॥

प्रमुदिततरकुन्ति, भ्राजितं याज्ञसेन्या ।
नय-नियमित धर्मम् भीमसेन-प्रशान्तम् ॥
विलसित मति रत्नैरर्जुनेनाऽऽहृतैश्च ।
नकुल सहित देवम् तत्पुरं सं चकाशे ॥ ३ ॥

नृपतिनय-बुध-"श्री कृष्ण"-संसत्पतित्वे ।
सकल भुवन-राजान् पूजितुं पाण्डवास्ते ॥
अति पुलकित देहाः धर्म-राज्यं विधातुम् ।
अभिलषितमकार्षु राजसूयाऽऽख्य-यज्ञम् ॥ ४ ॥

नृपति-तति-समीपे वर्द्धितुं यज्ञ-शोभाम् ।
ऋषि-मुनि-विबुधाँश्चाऽऽमन्त्रितुं वेदविज्ञान् ॥
कुरु-कुल-जनमुख्यान् प्रेषयामास दूतान् ।
"रवि-सुत" मपि कुन्ती, विद्रुतं, "धर्मराजः" ॥ ५ ॥

विदित सकलवृत्तः पुङ्गवः कौरवाणाम् ।
वयसि सकल-वृद्धः पाण्डव-प्रेमवाध्यः ।।
कृत-सकल-विवाहं द्वारिकायाः अधीशम् ।
यजनमपि दिदृक्षुः प्रागमत्प्रस्थमैन्द्रम् ।। ६ ।।

तदनु बहु-वितर्क-द्वेष-गर्ते पतन्तम् ।
सुमतमपि च "धर्मे" भीमसेने सशङ्कम् ।।
सह-गमन-सुनद्धं सं विधायाऽऽशु कर्णः ।
कुरु-कुल-युवराजं, राजसूयम् प्रतस्थे ।। ७ ।।

लसित कवचमङ्गे शोभितं कुण्डलाभ्याम् ।
सु-ललित कचभारं प्रोद्वहन्तं किरीटम् ।।
करधृत शरचापं पूर्व संस्थाः क्षितीशाः ।
श्रुत-विजय-विनम्राः "अङ्गराजं" प्रणेमुः ।। ८ ।।

गगन-गत पताकं सज्जित द्वार देशम् ।
कनक-घट-पटान्तैः रम्यवेदी प्रदेशम् ।।
ऋषि मुनिगण-पूतं गुञ्जितं वेद मन्त्रैः ।
बलि-पशु-परिपूर्णम् यज्ञवाटं ददर्श ।। ९ ।।

तदनु मयकराभ्यां निर्मितायां सभायाम् ।
शशिनमिव हसन्तं प्रोच्च सिंहासनाङ्के ।।
विनय भर विनम्रैः पाण्डु पुत्रैः परीतम् ।
मुकुट-कलितचन्द्रं "कृष्णचन्द्रं" ददर्श ।। १० ।।

उपरि विरचितायामङ्गना-दीर्घिकायाम् ।
रुचिरतर विभायां कृष्ण पत्नी-युतायाम् ।।
कमल दल सुगन्धां दीप्यमानाञ्च रत्नैः ।
मद-विलसित नेत्रां द्रौपदीमप्यपश्यत् ।। ११ ।।

निज-विरह-तपन्ती क्षिप्रमुत्थाय "कुन्ती" ।
विदित सकलवृत्ता पौत्र जन्मप्रसन्ना ॥
प्रवितरित-सुवर्णा स्वीय धात्री काराभ्याम् ।
मनसि लसित सौख्याऽभूत्समीक्ष्यैव "कर्णम्" ॥ १२ ॥

तदनु मयसभायां चित्रितां चित्र-पङ्क्तिम् ।
विरचित बहुवर्णाम् संकुलां चारु-वृत्तैः ॥
निज-जनन-कथायाः भूमिकायां निवद्धाम् ।
सहृदय-परिवेद्यां तर्कितश्चाप्यपश्यत् ॥ १३ ॥

नयन-रचित-तृष्णा; द्रष्टुमङ्गाऽवनीशम् ।
रति पतिमिव कृष्णा; भ्रान्तिमूरीचकार ॥
अनितर-नृप-वेध्ये तेन विद्धेऽपि मत्स्ये ।
वर-वरण-विमूढां ज्ञान-हीनां स्वकीयाम् ॥ १४ ॥

पुनरपि च सतृष्णं संकुचन्नेत्रपद्मा ।
रवि-तनय मुखेन्दोश्चन्द्रिकायाश्चकोरी ॥
"वसु"-गत सुमनस्का "पञ्चभर्त्री" चिराय ।
विविध-बुध-वयस्या, नैव शान्ति प्रपेदे ॥ १५ ॥

परिकलित सुवेषान् चेदिपादीन् नरेन्द्रान् ।
नरपति कुल गर्वान् क्षिप्रमालोकयन्तम् ॥
अवतरण-विलासी कृष्ण रूपेण विष्णुः ।
निज-सचिव-विनत्या आजुहावाऽथ कर्णम् ॥ १६ ॥

कृत-विविध विभूषे यादवेन्द्रस्य पार्श्वे ।
कवच कलित शोभम् चारु सिंहासनस्थम् ॥
श्रुति-विलसित भूषं मान-पात्रं मुरारेः ।
तरुण-"तरणि-पुत्रम्" पाण्डवाश्चार्व पश्यन् ॥ १७ ॥

संपदि स खलु भीष्मो "दानवीरं" प्रसिद्धम् ।
जगति भृशमुदारं राजसूये क्रतौ च ।।
सदनुभवमथैनं द्रव्य-दान-प्रदाने ।
धनपतिमनुभागेऽध्यक्ष-वर्यञ्चकार ।। १८ ।।

सफलयितुमतन्द्रः शन्तनु-प्राप्त जन्मा ।
हत सकल सुराऽरेः प्रस्तुवन्नामधेयम् ।।
सकल-नृप सभायाः आधिपत्येऽभिषेक्तुम् ।
अति विमल वचोभिः प्रञ्जलिः सन्नुदस्थात् ।। १९ ।।

नव-परिमल युक्तैश्चन्दनैर्गन्धमाल्यैः ।
प्रसृत बहु सुगन्धैः धूपदीपोपहारैः ।।
सकल नृपति मध्ये धर्मराजः प्रसन्नः ।
मदन-दमन-कान्तेरग्र पूजां चकार ।। २० ।।

सकलमिदमवेक्ष्य प्रोच्छलन्नास नाग्रात् ।
विधृत कटुकृपाणः पूर्वजन्मोच्च शत्रुः ।।
अपकृति-शत-हेतोः प्राप्त सर्वक्षमोऽपि ।
"शिशु" रनुचित वाक्यैः प्राक्षिपद् द्वारिकेशम् ।। २१ ।।

प्रलपति शिशुपाले पूर्व-संख्याऽतिगेच ।
कृत तिलक ललाटे भ्रू-विभङ्गच्छलेन ।।
प्रलय-समय-सूची सूत्थितो "धूमकेतुः" ।
निरतिशय कृपालोः पश्यतां सर्वराज्ञाम् ।। २२ ।।

लघुसमय विपश्चादेव सर्वो जनौघः ।
अमृत-विकल-राहोः कण्ठ-भेदे विदग्धम् ।।
तपनमिव सुचक्रम् दर्शनाऽऽख्यम् ददर्श ।
प्रभु-कर कमलस्योत्तर्जनी मध्य भागे ।। २३ ।।

तदनु विधृत भीतेः सन्मुखं चेदिपस्य ।
हरि ललित कराग्रं सम्परित्यज्य शीघ्रम् ।।
सपदि परिपतत्तत् सम्भृते राजसूये ।
कृतभय मवलोक्य त्रस्त-चित्ताः किलासन् ।। २४ ।।

उपरि पतन-भीतो धावमानः खलोऽसौ ।
शरणमभियियासुर्यस्य यस्याऽपि राज्ञः ।।
प्रखरमनुसरत्तत् तस्य तस्यैवमग्रे ।
अविरलमवलोक्य श्रान्तदेहो बभूव ।। २५ ।।

मुनिमिव धृतमौनम् कुण्डलोद्दीपितास्यम् ।
दिवसकर-सुपुत्रम् दिव्य सिंहासनस्थम् ।।
दलित जन-शरण्यं प्रप्य चेदी नृपोऽसौ ।
परिचित इव तस्थौ भीति-विक्लान्त देहः ।। २६ ।।

पतितमपि समाजे भूभृतां जीवने स्वे ।
शिशु-पतिमनुपश्यत्; कर्ण-सामीप्य भाजम् ।।
तदपि ख़लु विचित्रम् कृत्त-सोन्माद-नक्रम् ।
हरिकर-धृत-चक्रम् शान्तिमभ्याजगाम ।। २७ ।।

सकल नृप समाजे चेदिपालो विपन्नः ।
अति मलिन मुखोऽयम् शान्त तद्धेति-भीतिः ।।
रवि-तनयमपश्यत् स्वस्य संरक्षणाय ।
विरलतरजनाः वै दत्त-सौख्याः भवन्ति ।। २८ ।।

रचित विपुल वैरम् कृष्णचन्द्रेण साक्षात् ।
धृत नरपति-मानं प्रोद्धतं राज-वर्गे ।।
स्वमपि खलु नृपत्वे, नानुपश्यन्तमेनम् ।
स्मित लसित शुभास्यः सत्वरं व्याजहार ।। २९ ।।

वयमितर-समानाः नैव राजन् ! प्रशस्ताः ।
स्व- सदृश-मति मानान् चक्रवर्तिन् ! भजस्व ॥
इति कलित कटाक्षः राज-राजाऽभिमानम् ।
नृप सदसि तथैनम् द्राक् सुदूरीचकार ॥ ३० ॥

सपदि च शिशुपाल आत्मरक्षार्थमस्मात् ।
यजन-सदन मध्यात् विप्रदुद्राव भीतः ॥
दहन-किरण-वक्रम् सम्भ्रमच्चारुचक्रम् ।
हरि-रिपु-वर-देहात् पातयामास शीर्षम् ॥ ३१ ॥

तदनुसरण कर्तॄन् पोषितान् चेदिपेन ।
पर-धन-परिपुष्टान् घोषिताऽऽतङ्कवादान् ॥
दलित-दलितवर्गान् राष्ट्र-विद्रोह-भाजः ।
हरि-कर-वर-हेतिर्मद्यपान् तान् चकर्त ॥ ३२ ॥

सुर-यजन निकेताद् दूर-हाहेति नादः ।
परमधि, "हरये स्वाहे"तिवादः समुत्थः ॥
तदुपरि विजिगीषा-रिक्त-राजन्य-संघैः ।
प्रकृतमनुहसद्भिः स्वं पुरं सम्प्रतस्थे ॥ ३३ ॥

स्थल-जल परिबोधे मायया दानवस्य ।
अहमिति परिमूढः प्रास्खलद् धार्तराष्ट्रः ॥
प्रचुरमुप हसन्ती द्रौपदी प्राह चेत्थम् ।
"भवति नियत मन्धा सन्ततिस्तादृशाणाम्" ॥ ३४ ॥

अनुचितमपि वाक्यं सन्निशम्याऽति खिन्नः ।
मदगज इव भिन्नोऽभूच्च दुर्योधनोऽसौ ॥
सकल-नृप-भुजङ्गो निःश्वसन् सं जगाम ।
कुरु-कुल-नृप-जुष्टां राजधानीम् स्वकीयाम् ॥ ३५ ॥

यदुपति रतितेजो वीक्ष्य सौदर्शनं तत् ।
प्रलय-लय-समर्थम् लोक संहार दक्षम् ।।
गमयितुमुपचक्रे प्राक्तनं स्वस्य लोकम् ।
सकल नृप समाजं शान्ति-युक्तं चकार ।। ३६ ।।

अवनितल नृपेन्द्रै र्दत्त-रत्नोपहारान् ।
वितरितुमभियुक्तः पुत्ररूपः खरांशुः ।।
ऋषि-मुनि-बुध-वर्यान् तोषयन् द्रव्य-दानैः ।
समिधमयममुञ्चत् राजसूयोत्तमाग्नौ ।। ३७ ।।

तदनु खलु समुत्थो धर्मराजः प्रशान्तः ।
हवन-दहन-मध्ये संजुहावाऽऽशु हव्यम् ।।
उपरचित विकल्पः सर्वयज्ञ-क्रियाणाम् ।
अनुगमित-पुरोधाः तोषिताऽऽचार्य-वर्गः ।। ३८ ।।

सदसि खलु नृपाणां कन्स-विध्वन्सकोऽयम् ।
शरददर सुधांशु प्रेक्षणीयाऽऽननेन ।।
क्रतुवर निकराणां सत्तमे "राजसूये ।"
सुर-यजन-करेऽस्मिन् पूर्णता मुज्जुघोष ।। ३९ ।।

ऋषि-मुनि-वर-विप्रैर्लब्ध सीमान्त मोदैः ।
धन-वसन-सुतृप्तैर्गीतदिव्य-प्रशंसः ।।
बल-विदलित कन्सं चन्द्रवंशाऽवतन्सम् ।
किमपि किल शशंसोद्दीप्त-कर्णाऽवतन्सः ।। ४० ।।

सपदि कृत निदेशो वाजि-संयोजनाय ।
जिगमिषुरपराण्हे च स्वकीयं निकेतम् ।।
कृत सकल सुसज्जे स्यन्दने नन्द्यमानः ।
कुरु-पुरमुपयातो नन्दनस्तिग्मरश्मेः ।। ४१ ।।

कथितमिदमुदन्तम् राजसूयस्य पूर्वम् ।
उप-शकुनि समस्तं क्लान्त दुर्योधनेन ।।
अविकलमनुशृण्वन् वैभवं पाण्डवानाम् ।
कपटमभिवितेने तत्र गन्धारराजः ।। ४२ ।।

रहसि च धृतराष्टं तत्प्रियाऽग्रे निवेद्य ।
सकलनृप-धृताज्ञं धर्मराजं निशम्य ।।
ज्वलित हृदय-तापः कूट-कापट्य-दक्षः ।
सपदि परियुयोज द्यूतयज्ञेन जेतुम् ।। ४३ ।।

समधिगत निमन्त्रः पाण्डवानां वरिष्ठः ।
अनुजगण-निषिद्धो वारितश्चाऽपि कुन्त्या ।।
विचलित वर भाग्यः स्वेन षट्केन युक्तः ।
त्वरितमुपजगाम द्यूतनाट्यस्य मञ्चम् ।। ४४ ।।

अविदितवति "कर्णे" दूर संस्थे च कृष्णे ।
प्रवर नृपति दृष्टे द्रोण-भीष्मे तटस्थे ।।
शकुनि-समभिनेये कौरवाः पाण्डवाश्च ।
अभिनय लसिताङ्गाः द्यूतनाट्यं विरेचुः ।। ४५ ।।

चतुर जन विनिन्द्याः द्योतकाः दुर्नयस्य ।
सकल नृप दुराशाः घातकाः भारतस्य ।।
शकुनि-नियति-दुष्टाः द्यूतनाट्यस्य पाशाः ।
नृप-सदसि निपेतुः पाण्डवानां विरुद्धम् ।। ४६ ।।

धन-जन-परिहीनो राज्य-हीनः सहिष्णुः ।
प्रखर पतित भाग्यो हारयामास पत्नीम् ।।
खल-दलन-समर्थम् वारयन् भीमसेनम् ।
तदुपरि निजधर्मम् नाऽत्यजद् "धर्म-राजः" ।। ४७ ।।

कलुषितमिदमर्हद्गर्हणीयम् कुकर्म ।
शकुनि-कृत-निदेशम् सूर्य-सूनुर्निशम्य ।।
धृत-धृतिरनुजेनोल्लासयन् सत्कृपाणम् ।
सु-विघटित कपाटां द्यूत-शालां विवेश ।। ४८ ।।

तदनु किल सुवृद्धान् कौरवान् पाण्डवाँश्च ।
स्फुट कृत समवज्ञां लज्जितां "याज्ञसेनीम्" ।।
कच-निकर-विकृष्टां दुष्ट दुःशासनेन ।
निपुणतरमवेक्ष्य स्वासने संस्थितोऽभूत् ।। ४९ ।।

नवधृतमनुकूलं पार्षतीयम् दुकूलम् ।
कर-कलितमकर्षन् मूढ-दुःशासनोऽसौ ।।
अविनयमवरोद्धुं द्रोण-भीष्मादि मध्ये ।
अपि कुशल विपश्चिन्नैव कश्चिच्छशाक ।। ५० ।।

त्वरितमुपजगामोत्पीडिता "पञ्चभर्त्री" ।
समुदित परिकम्पा "कर्ण"-सिंहासनाग्रे ।।
कुरु-भुजग-भुजाग्रं सम्परिच्छेत्तु कामः ।
प्रखरतर कृपाणं "सूर्य-पुत्रो" ददर्श ।। ५१ ।।

अधरितनिजमानां संस्मरन् सोऽपि किन्तु ।
न खलु विवदिषन्तीम"ङ्गराजेति" वर्णैः ।।
मनसि परिविनिन्दन् कौरवाणां समाजम् ।
प्रसभमरुण नेत्रः प्राव्रजत्स्वं निकेतम् ।। ५२ ।।

मधु-रिपु-कृपयेमां वृद्धिमत्सद् दुकूलाम् ।
नृपति-सदसि नग्नां नैव कर्तुं शशाक ।।
सकल जगति येषां रक्षकः श्री-निवासः ।
न भवति किल तेषां दुर्जनैः काऽपि भीतिः ।। ५३ ।।

अपहृत निजराज्याः पाण्डवाश्चाऽपि पत्नी- ।
सहित-रहित कन्त्यो द्वादशाब्दम् वनाय ।।
अविदित निजवासाः वर्षमेकञ्च यावत् ।
तदनु, विदुर-गेहम् जग्मुरेते "पृथा" च ।। ५४ ।।

विलसति च कदाचित्प्राणिनां चारु-भाग्यम् ।
अपि च खलु कदाचिद् ह्रास-कक्षामुपैति ।।
भुवि सकल नराणां चक्रवत् वर्तमानम् ।
शुभमशुभमुदर्कम् सर्वमेतत्करोति ।। ५५ ।।

कर्णः प्रोज्झित कैतवः प्रतिदिनम् राज्यं स्वकं वर्द्धयन् ।
प्रत्यञ्चाऽञ्चित "काल पृष्ठ"-धनुषा सर्वान् नृपान् तर्जयन् ।।
दानैश्चाप्यतुलैः समस्त-जनता-दारिद्र्यमुत्सारयन् ।
पत्नीभ्यामनुरञ्जयन् निजमनो सर्व-प्रणम्यो बभौ ।। ५६ ।।

।। कर्ण-राजसूयिकन्नाम द्वादशसर्गः समाप्तः ।।

---

।। श्रीः ।।

# पारिवारिकन्नाम त्रयोदशः सर्गः

अन्योऽन्य सम्प्राप्त सहोदरात्वम् ।
पत्नी-युगं तन्नितरां बभाषे ।।
"कर्णस्य" गार्हस्थ्य-विधौ सहायम् ।
आदर्श-भूतम् जगतां मनोज्ञम् ।। १ ।।

वीराङ्गनात्वम् रमयोर्द्वयोश्च ।
वैदुष्यमुच्चं सफलं कलासु ।।
अदृश्य संसार-कलत्र साम्यम् ।
सौन्दर्यमुच्चैश्च तयोश्चकाशे ।। २ ।।

तमाल-नीलासु कदाचिदाभ्याम् ।
नितान्तमुद्यान परम्परासु ।।
कदाचिदत्युन्नत-सौध-मध्ये ।
विलासिनीभ्याम् विजहार नूनम् ।। ३ ।।

धृतोरुमाला किल "मेघमाला" ।
शत्रुञ्जयं तम् नितरां सिषेव ।।
सम्प्राप्य राधाधिरथौ तदीयां ।
सेवां प्रसन्नौ विमलां तदाऽऽस्ताम् ।। ४ ।।

तदीयपुत्रो "वृषसेन" नामा ।
पितेव शस्त्राऽस्त्र महाप्रवीणः ।।
चकार राज्यस्य परां व्यवस्थाम् ।
शक्त्याऽन्वितस्तज्जनता-प्रशस्याम् ।। ५ ।।

सा "वीर-सेनं" खलु "चित्र सेनम् ।
पुनश्चतुर्थम् "वृषकेतु" संज्ञम् ॥
क्रमाऽनुसारं सुषुवे प्रसन्ना ।
नितान्त सौभाग्य-युता वृषाली ॥ ६ ॥

प्रियाऽनुरक्ता खलु "सुप्रिया"ऽपि ।
"सुशर्म" णाद्यम् ननु "चारुसेनम्" ॥
सा "भानुसेनं ननु "शक्ति सेनम्" ।
कालाऽनु सारं जनयाम्बभूव ॥ ७ ॥

इत्थं वसुः सर्व कुमार-रत्नैः ।
समन्वितः सन् सुतरां विरेजे ॥
यथा स्वकीयैः सममंशु-पुञ्जै ।
देदीप्यमानश्च सहस्ररश्मिः ॥ ८ ॥

शत्रुञ्जयं चाप्यनुवर्तमाना ।
सा मेघमाला सम"मेघमाला" ॥
"शशाङ्कसेना" मनु "वीरसेनम्" ।
अजीजनत् कञ्चन-चारुगात्री ॥ ९ ॥

अनन्तरं ते सकलाः कुमाराः ।
बुधैर्विधिज्ञैः "गुरु" वत् प्रगल्भैः ॥
निर्वृत्त-संस्कार-गणाः क्रमेण ।
शाणाऽञ्चिताः रत्न-वराः इवासन् ॥ १० ॥

पित्रा जगन्मान्य धनुर्धरेण ।
ते रौरवीयां त्वचमादधानाः ॥
प्रक्षेपणाऽस्त्रेषु रहस्य वत्सु ।
क्रमेण पारं गमिताः बभूवुः ॥ ११ ॥

ऊर्जोल्लसत्तत्परमाणु-गोल ।
विस्फोट विद्या कलेन प्रवीणाः ।।
रणाङ्गणेष्वप्यपरैरदम्या ।
मृगेन्द्र-विक्रान्त तमाः विरेजुः ।। १२ ।।

अनेक नाराच- विमोचनेषु ।
वैशिष्ट्यमापुश्च पितुः प्रसादात् ।।
कुलस्य सम्प्राप्त परम्परातः ।
स्वधीत-विद्याः सफली भवन्ति ।। १३ ।।

आन्वीक्षिकी शाश्वत दण्डनीतिः ।
त्रयीच विद्याऽधिगता क्रमेण ।।
पुनश्च लालित्य समन्वितानाम् ।
पारंगतास्ते सततं कलानाम् ।। १४ ।।

प्रासाद-मध्ये सततं लसन्तः ।
समं वयस्यै र्नगरे चरन्तः ।।
वनेषु रम्येषु रथैर्भ्रमन्तः ।
प्रसादयन्तः पितरौ तदाऽऽसन् ।। १५ ।।

वनेचरैः सञ्चरतो वनान्ते ।
राज्याऽपहारेण भृशं विपन्नान् ।।
सुयोधनः पाण्डु-सुतान् दिदृक्षुः ।
घोष-प्रयाणाय मतिञ्चकार ।। १६ ।।

श्रुत्वोद्यमं तस्य "पितामह": सः ।
निषेधयिष्यन् गमनाय तत्र ।।
वृथोद्धतं मातुल-मन्त्रणाभिः ।
उवाच तं प्रीतमनाः नृपाऽग्रे ।। १७ ।।

कृतं त्वयैतत्सकलं विरुद्धम् ।
अपास्त मर्याद मुदर्क-तापम् ॥
निपातनं चाऽपि कुरोः कुलस्य ।
त्यजाऽऽशु गर्ह्यम् शकुनेः कुमन्त्रम् ॥ १८ ॥

अद्याऽपि पुत्र ! प्रतिबोधयामि ।
"प्रसादनीयाः खलु पाण्डवास्ते ॥
प्रत्यर्पणीयञ्च तदीय राज्यम् ।
छद्माऽऽहृतं तद्धि दुरोदरस्य ॥ १९ ॥

दुःशासनेनाऽपि तवाऽनुजेन ।
"वस्त्राऽपकर्षः "खलु केश-कर्षः" ॥
कृतः सभायां शकुनेर्मतेन ।
सतामनौचित्यमसौ बिभर्ति ॥ २० ॥

मध्येसभं तां कुरु-राज्य-लक्ष्मीम् ।
प्रत्युत्सरन्तं भुजदण्डमुग्रम् ॥
तत्रैव "कर्णः" समखण्डयिष्यत् ।
यद्य"ङ्गराजं" समबोधयिष्यत् ॥ २१ ॥

सन्त्यज्यतां पाण्डवा-दुर्दशायाः ।
सन्दर्शनेच्छाऽपि ममाऽनुरोधात् ॥
सर्वस्व नाशे; स्वपथे चलन्तः ।
प्रशान्त-चित्ताश्च भवन्त्यजेयाः ॥ २२ ॥

यदि प्रियं जीवनमेतदुर्व्याम् ।
यदिच्छसि स्वम् कुरुराज-राज्यम् ॥
सुखेषु यद्वा प्रबलोऽभिलाषः ।
तत्पाण्डवानां हितमाचर, त्वम्" ॥ २३ ॥

एतावदुक्त्वा विरराम भीष्मः ।
सुयोधनस्याऽनुपमो हितैषी ॥
मौनं समास्थाय मनस्यतुष्यन् ।
शुश्राव सर्वम् तदनादरेण ॥ २४ ॥

ततो विनिर्गत्य महाऽभिमानी ।
वृद्धस्य वाचं नितरां विगर्हन् ॥
सन्देह-सन्दोहमपाकरिष्यन् ।
कर्णाऽऽलयं शान्तमसौ जगाम ॥ २५ ॥

उपास्यमानं सचिवैः स्वकीयैः ।
राष्ट्रोन्नतौ चारु विमर्शयन्तम् ॥
स्वच्छां विधातुं किल राजनीतिम् ।
कृतोद्यमं तं सहसा ददर्श ॥ २६ ॥

सम्प्राप्त सत्कार विधिस्तदानीम् ।
प्राऽस्तौत्तदग्रे रमणीय-यात्राम् ॥
स-प्रश्रयां साऽनुचरां वनान्ते ।
पितामहेन प्रखरं निषिद्धाम् ॥ २७ ॥

निशम्य वार्ताञ्च सुयोधनस्य ।
तत्पाण्डवीयं पतनं दिदृक्षोः ॥
अनुत्तमां भीष्मपितामहोक्तिम् ।
समर्थयामास हितेच्छुरस्य ॥ २८ ॥

पुनश्च संवीक्ष्य धृताऽनुतापम् ।
वृथाऽऽग्रहग्राह-गृहीतमेनम् ॥
तस्मिन् वनान्ते विजिहीर्षयैव ।
तं घोष-यात्राऽनुमतं चकार ॥ २९ ॥

प्रसन्न चेताः बहुवाहिनीभिः ।
समन्वितश्चाऽऽशु सुयोधनोऽयम् ।।
"कर्णम्" पुरस्कृत्य सुवर्ण वर्णम् ।
वन-प्रदेशं त्वरितं जगाम ।। ३० ।।

निवेश्य चित्रान् शिविराननेकान् ।
सुयोधनोऽसौ मृगया-विनोदी ।।
छिद्राणि पश्यन् खलु पाण्डवानाम् ।
स-पत्निकानां न्यवसन् निकामम् ।। ३१ ।।

"कर्ण" श्च कुर्वन् विविधान् विहारान् ।
वनेषु रम्येषु जलाशयेषु ।।
पश्यन् विचित्रानपि वन्य-जन्तून् ।
मनः स्वकीयं रमयाञ्चकार ।। ३२ ।।

निदाघ-कालोद्धत घर्म-तप्तं ।
तमङ्गराजं ह्यवलोकयन्ती ।।
सेवाऽनुरक्ता परिचारिकेव ।
घर्म-प्रघर्षा प्रबभूव वर्षा ।। ३३ ।।

नभस्तलं मेघघटाच्छटाभिः ।
आच्छादितं चारुतरं चकाशे ।।
नितान्त कान्तं मधुसूदनस्य ।
शरीर-शोभामनुवर्तमानम् ।। ३४ ।।

घनावली-दर्शन-जात-हर्षा ।
सुखे धृताशा परिशान्त तर्षा ।।
समुत्सुकैवं कल कामिनीव ।
बभूव शश्वद हरिता वनाली ।। ३५ ।।

अत्यन्त रक्तै रधुनेन्द्रगोपैः ।
रराज पङ्क्तिर्हरिता वनानाम् ॥
विभिन्न रागैर्नितरां लसन्ती ।
शाटीव कामार्दित-सुन्दरीणाम् ॥ ३६ ॥

सप्तच्छदा श्चारुकदम्बनीपाः ।
नवीन-पत्रैर्हरितैर्विरेजुः ॥
सु-स्वागते प्रोल्लसितोद्यमस्य ।
प्रक्लृप्त-शोभाः इव मीनकेतोः ॥ ३७ ॥

विघातकाः कान्त-वियोगभाजाम् ।
सुतीक्ष्णतामप्यतुलां भजन्तः ॥
कन्दर्प-मुक्ताः सहसाः निपेतुः ।
नाराच-धाराः इव वारि-धाराः ॥ ३८ ॥

घनाङ्क मध्ये परितः स्फुरन्ती ।
विशाल विद्युत्सुतरां चकाशे ॥
बलाद् विमाने दश-कन्धरस्य ।
"सीते"व बन्दीकृत-चारुगात्रा ॥ ३९ ॥

अनन्तरं गर्जन-तर्जनाभ्याम् ।
युक्ता स्तडिद्भिः सलिलस्य धाराः ॥
पेतुश्चिरं राक्षसकान्तकस्य ।
आग्नेय-वाणाः इव राघवस्य ॥ ४० ॥

विभिन्नकूलाः सततं वहन्त्यः ।
द्रुमान् तटस्थानपि पातयन्त्यः ॥
उत्पन्नवेगाः जलधिम् प्रयातुम् ।
कृताऽभिसाराः इव दर्शनीयाः ॥ ४१ ॥

निरीक्षतेऽयं जलदो निशायाम् ।
पर्याप्त-विद्युन्नयनैर्मुखानि ।।
संकेतितैः कामिजनैर्विहर्तुम् ।
कृतत्वराणामभिसारिकाणाम् ।। ४२ ।।

विभिन्नवर्णम् स्व धनुर्दधानः ।
गजानुकारानधिरुह्य मेघान् ।।
बज्रं विमुञ्चन्नणु-गोलकानि ।
कृतोद्यमो दैत्य-वधाय शक्रः ।। ४३ ।।

कृषि-प्रवीणाः कृषकाः पुनश्च ।
ग्रीष्म-प्रकोपात् सुतरां हताशाः ।।
कृताऽनु कम्पाः जलदैर्दयार्द्रैः ।
उज्जीवितास्ते जल वर्षणेन ।। ४४ ।।

क्षेत्राणि मेघैर्हरिती कृतानि ।
मनांसि लोकस्य च सान्त्वितानि ।।
तृणानि गोभ्यश्च समेधितानि ।
जलानि कूपेष्वपि वर्द्धितानि ।। ४५ ।।

निशम्य पर्जन्य-निनादमुच्चैः ।
मुमोच मण्डूक-कुलं वचांसि ।।
धृतोरु मौनाः नियमेन पूर्वम् ।
वेद-ध्वनिं विप्रवराः इवान्ते ।। ४६ ।।

तमोऽनु रुद्धेषु निशा-मुखेषु ।
आभान्ति "ख-द्योत"-गणाः न खेऽटाः ।।
कलौ यथा धूर्तजनैर्निरुक्ताः ।
पाखण्ड-खण्डाः नतु वेदमन्त्राः ।। ४७ ।।

ग्रीष्मेऽति शुष्काः, प्रजलाः इदानीम् ।
वहन्त्य सन्मार्ग-गताः कुनद्यः ।।
यथा धनाढ्यस्य खलस्य पुन्सः ।
शरीर-सम्पत्ति-धरा-धनानि ।। ४८ ।।

पुनर्नवोज्जीवन-सेवनेन ।
स्थलौकसश्चाऽपि जलौकसश्च ।।
प्रतीक्षमाणाः हरि-दर्शनेन ।
भक्ताः यथा प्राप्त नवीन बोधाः ।। ४९ ।।

धनुर्महेन्द्रस्य गुणेन हीनम् ।
गुणैः समेते गगने रराज ।।
समुच्चये व्यक्ततमे गुणानाम् ।
गुणै र्विहीनः पुरुषो यथैव ।। ५० ।।

लोकैकबन्धुष्वपि वारिदेषु ।
स्थिरां न चक्रुस्तडितः स्वमैत्रीम् ।।
द्रव्य-प्रदेषूच्च गुणाऽन्वितेषु ।
यथा नरेषु प्रमदाः स-कामाः ।। ५१ ।।

सरिद्भिरुच्चैः कृत संगमोऽब्धिः ।
सं चुक्षुभेऽयम् श्वसनोर्मि-युक्तः ।।
अपक्व योगो धृत-वासनश्च ।
योगीव संसार गुणाऽनुषक्तः ।। ५२ ।।

वर्षाऽम्बुधारा-परिताड्यमानाः ।
न विव्यथुस्ते गिरयो नितान्तम् ।।
यथा महद्भिर्व्यसनैः परास्ताः ।
सु-ध्यात "गोविन्द'-पदारविन्दाः ।। ५३ ।।

मार्गाः बभूवुर्नितरामगम्याः ।
असंस्कृताः भूरि तृणाः स-शङ्काः ।।
अपठ्यमानाः श्रुतयो यथा वै ।
विप्रैः कलावर्थपरैर्विमूढैः ।। ५४ ।।

स्वज्योत्स्नया प्रोल्लसितैश्च मेघैः ।
छन्नः शशाङ्को न रराज तादृक् ।।
स्वकीय-भासैव विभासिताहङ्-
कारेण युक्तः पुरुषो यथाऽयम् ।। ५५ ।।

मेघान् समुद्घोषित काम्यकेकाः ।
शिखण्डिन श्चारु समभ्यनन्दन् ।।
विनष्ट तापाः इव सद् गृहस्थाः ।
"गोविन्द"-भक्तान् विशदैर्वचोभिः ।। ५६ ।।

अशान्त-रोधःसु जलाशयेषु ।
खिन्नाः भृशं सारस-पक्षि-युग्माः ।।
न्यू सुर्यथा ग्राम्य-नराः गृहेषु ।
अशान्त-कृत्येष्वपि दुःखभाजः ।। ५७ ।।

मेघेषु वर्षत्सु जलैर्विभिन्नाः ।
प्रगाढ देहाः अपि सेतु बन्धाः ।।
पाखण्ड-पूर्णैं रसतां कुवादैः ।
कलावबाध्याः इव वेद-मार्गाः ।। ५८ ।।

वर्षर्तु-सौन्दर्य-नितान्त-तुष्टः ।
कर्णो वनान्ता च्छिविरं जगाम ।।
गन्धर्व-युद्धे प्रति युद्ध-मुक्तः ।
सुयोधनोप्यगत अस्य पूर्वम् ।। ५९ ।।

दिने परस्मिन्कुरुराजमेनम् ।
विशाल कायाऽजगरो जघास ॥
एकाकिनं चैव वने भ्रमन्तम् ।
कृतेऽपि यत्नेऽफलतां व्रजन्तम् ॥ ६० ॥

तस्याऽऽर्तनादैः परिकृष्यमाणः ।
कर्णो विदीर्णाऽजगरोदरोऽयम् ॥
जीवन्तमुन्मोच्य मुखात्तदीयात् ।
सर्वैः समं प्राप पुरं कुरूणाम् ॥ ६१ ॥

एवं मित्र-सुयोधनं गतभयं संरक्षयन् सर्वदा ।
औचित्येन समन्वितैर्नृप-नयैर्नित्यं परामर्शयन् ॥
षड्यन्त्रैः शकुनिप्रभृत्यवकृतैर्ग्रस्तं च तैरुद्धरन् ।
निश्चिन्तं विरराज, राज-भवने हर्षेण "मित्रात्मजः ॥६२॥

॥ कर्ण-पारिवारिकन्नाम त्रयोदश सर्गः समाप्तः ॥

---

॥ श्रीः ॥

# दिग्विजयोनाम चतुर्दशः सर्गः

देशऽस्मिन् भारते नाम्ना ।
वैदेशिक-समुद्भवः ॥
आन्तरङ्गोऽथ वाह्यश्च ।
कलिः प्रादुष्कृतो नृपैः ॥ १ ॥

प्रदेशेषु प्रजाः सर्वाः ।
भृशमातङ्क पीडिताः ॥
नैवाप्नुवन् दिने शान्तिम् ।
निद्रां रात्रौ भयार्दिताः ॥ २ ॥

केन्द्रे दुरोदर-ग्रस्ते ।
निर्भीकाः प्रबलाः खलाः ॥
निर्बलान् पीडयामासुः ।
भृशमातङ्क-वादिनः ॥ ३ ॥

आततायि जनोद्विग्नाः ।
ग्रामाः कोषास्तथा जनाः ॥
निर्दयं लुण्ठिताः सर्वे ।
तर्जिताः उग्रवादिभिः ॥ ४ ॥

शस्त्रैः प्रक्षेपणास्त्रैश्च ।
निर्दोषाश्चाऽपि सज्जनाः ॥
मारिताः, मार्ग-गामीनि ।
यानानि, ज्वालितानि च ॥ ५ ॥

प्रत्यहम् भूरि विस्फोटाः ।
गोलानामभवँ स्तथा ॥
ददृशेऽराजकत्वञ्च ।
भारतेऽपि प्रभा-रते ॥ ६ ॥

शमितु' क्रूर वैशस्यं ।
ललाटाऽऽकाश भूषणम् ॥
भ्रू-केतु रुदितः क्षिप्रम् ।
क्रुद्ध-कर्णस्य दीप्तिमान् ॥ ७ ॥

परित्राणाय दीनानाम् ।
खलानां दमनाय च ॥
शान्ति-संस्थापनार्थाय ।
"दिग्जयाय" मनोदधे ॥ ८ ॥

तत्कालं सज्जितां चक्रे ।
नाना शस्त्राऽस्त्र शालिनीम् ॥
गजाऽश्व रथ पादातैः ।
संकुलां महतीम् चमूम् ॥ ९ ॥

कौरवान् सं-नियोज्याऽऽशु ।
राजधानी-सुरक्षणे ॥
गङ्गायाः प्राक् तटं श्रीमान् ।
भूषयामास केवलः ॥ १० ॥

सर्व सैनिक मध्यस्थः ।
सेनापति-समन्वितः ॥
चमत्कृत महोत्तन्सः ।
बभ्रे कौमार-चेष्टितम् ॥ ११ ॥

तत्र जैत्र रथाऽऽसीनः ।
काल पृष्ठम् समुद्वहन् ।।
रणवाद्यैः सुनिर्घोषैः ।
घोषयामास दिग्जयम् ।। १२ ।।

"वृषाली" तिलकं कृत्वा ।
भाले चन्दाऽर्द्ध सन्निभे ।।
वीरम् नीराजयामास ।
दिक्चक्र विजयोद्यतम् ।। १३ ।।

"सुप्रिया," युद्धवीरस्य ।
कम्बुकण्ठे समर्पयत् ।।
ग्रथितां विविधैः पुष्पैः ।
जयमालां जय प्रदाम् ।। १४ ।।

ददुः शुभाशिषः सर्वे ।
स्वस्ति वाचन पूर्वकम् ।।
सत्यवाचः प्रवीराय ।
प्रसन्नाः वैदिकाः बुधाः ।। १५ ।।

ध्वजैश्चैव पताकाभिः ।
सोत्साहा चतुरङ्गिणी ।।
तिमिनक्र झषाऽऽकीर्णा ।
परा गङ्गेव सम्बभौ ।। १६ ।।

खड्ग-चाप-शर-प्रास- ।
शतघ्नी वज्रशक्तिमान् ।।
बभासे प्रबलोद्वेलः ।
सेनाब्यूह इवोर्भिमान् ।। १७ ।।

विलसच्छ्रवणोत्तन्सः ।
कवचेनाऽऽवृतः स्वयम् ।।
उत्प्रेक्ष्य भ्रु-कुटी भङ्गः ।
प्रबभाविव भास्करः ।। १८ ।।

भीष्माद्याः कौरवाः सर्वे ।
कृप-द्रोण पुरः सराः ।।
अयमेकोहि पर्याप्तः ।
प्रलयायेति मेनिरे ।। १९ ।।

कृताऽभियानं तं श्रुत्वा ।
विजेतुं सकलाः दिशः ।।
मौनमाकलयाञ्चक्रुः ।
दुर्दान्ता श्चैव भू-भुजः ।। २० ।।

सः पूर्वां पूर्वमुद्दिश्य ।
शची-सापत्न्य-शालिनीम् ।।
दिशं दिग्गज विक्रान्तः ।
प्रतस्थे हस्तिनापुरात् ।। २१ ।।

"काम्पिल्य नगरं" प्राप ।
पाञ्चाली जन्मनाऽञ्चितम् ।।
पूर्वं विमर्दितं स्वेन ।
विभीतं पुनरागमात् ।। २२ ।।

द्रुपदः सचिवैः सार्द्धम् ।
"धृष्ट-द्युम्नेन" संयुतः ।।
प्रत्युज्जगाम नागाऽश्वैः ।
जनैश्चैव प्रपूजितुम् ।। २३ ।।

नाना विधानि रत्नानि ।
विनम्रस्तमुपाहरत् ।।
तोषयामास सद्वाक्यैः ।
"वसुसेनं" स-सैनिकम् ।। २४ ।।

निचखान जय-स्तम्भम् ।
काम्पिल्यनगरेऽद्भुतम् ।।
शान्तिञ्च स्थापयामास ।
औद्धत्य-रहितां शुभाम् ।। २५ ।।

कौसलानगमच्शीघ्रम् ।
उत्तीर्य ध्वजिनी-गजैः ।।
सरयूं सूर्यवंश्यानाम् ।
राज्ञां चारित्र्य-शालिनीम् ।। २६ ।।

कौसलेन्द्रश्च सम्भाव्य ।
तम् सूर्य सम वर्चसम् ।।
गोत्र-दृष्ट्याऽपि सन्मान्य ।
मयोध्यायामथाऽऽनयत् ।। २७ ।।

तत्रत्यं धूलि-सर्वस्वम् ।
"रामचन्द्र"-पदाञ्चितम् ।।
शिरसा धारयामास ।
जाग्रत्प्राक्तन संस्मृतिः ।। २८ ।।

दिनत्रय कृताऽऽवासम् ।
सत्कारैरभिपूजितम् ।
पद्मरागादि रत्नानि ।
प्रीत्या नम्रमुपाहरत् ।। २९ ।।

तत्रत्यान्नागरान् सर्वान् ।
स्व-स्व-धर्मे प्रवर्तयन् ।।
मगधानाम्पुरं रम्यम् ।
"गिरि-व्रज" मुपागमत् ।। ३० ।।

जरासन्ध-सुतोऽनेन ।
युद्धाय कृत निश्चयः ।।
वारितः सचिवैः सर्वैः ।
स्मारितः पितृ-निग्रहम् ।। ३१ ।।

जग्राह चरणौ चाऽस्य ।
पितृ-जेतुः स्व-यम्वरे ।।
सुवर्ण-रत्न-मुक्ताद्यैः ।
द्रव्यैस्तं सममर्हयत् ।। ३२ ।।

सा सेना सत्वरं प्राप ।
कर्ण-पृष्ठाऽनुगामिनी ।।
"वङ्गान्" शस्यैश्च समृद्धान् ।
नदीभिश्च सुरक्षितान् ।। ३३ ।।

नदेन ब्रह्मपुत्रेण ।
दुस्तरेण च दुर्गमान् ।।
देवनद्याऽन्यनद्याढ्यान् ।
प्रतिपक्षि-भयङ्करान् ।। ३४ ।।

"सुकेतुः" वङ्गराजश्च ।
श्रुत्वाऽऽप्तैश्च वसूद्यमम् ।।
युद्धपोतैर्महानौभिः ।
महारण-परोऽभवत् ।। ३५ ।।

सैनिकैर्भीषणैर्युक्तः ।
जलयानैः सुदुर्जयः ।।
रुरोध मार्गम् "कर्णस्य" ।
गङ्गायाः पश्चिमे तटे ।। ३६ ।।

दृष्ट्वेमं भूरि सम्बाधम् ।
विरुद्धाञ्च परिस्थितिम् ।।
'प्रभञ्जनं' समाहूय ।
मन्त्रयामास निर्भयम् ।। ३७ ।।

सुकेतोः सैनिक-व्यूहम् ।
युद्ध-पोतेष्वव स्थितम् ।।
आक्रान्तुं सैनिकान् स्वीयान् ।
आदिदेश महा बलान् ।। ३८ ।।

शतघ्नी-क्षिप्तगोलेभ्यः ।
समुत्पन्नो महाऽनलः ।।
व्यूहं विध्वन्सयामास ।
वंग-राजस्य सत्वरम् ।। ३९ ।।

सैनिकैरस्य विक्रान्तैः ।
वङ्ग योधाः प्रधाविताः ।।
आत्मानमर्पयामासुः ।
उच्च हस्ताश्च शेषिताः ।। ४० ।।

प्रभञ्जनोऽस्य सेनानीः ।
वङ्गेशं वद्धमान यत् ।।
तदन्तेऽङ्गनरेशस्य ।
विनम्रो वश्यतामयात् ।। ४१ ।।

समुत्तस्थे महाकेतु ।
रदम्यो हस्ति-लाञ्छनः ।।
रणोऽस्मिन्नङ्गराजस्य ।
विजयः परिघोषितः ।। ४२ ।।

सर्वैश्चैव च शस्त्राऽस्त्रैः ।
रत्नौघैर्हेम-भूषितैः ।।
कर्णाम् प्रसादयाञ्चक्रे ।
वङ्गराजो मुदाऽन्वितः ।। ४३ ।।

जयस्तम्भाऽञ्चितं कृत्वा ।
"कालिका-पत्तनं" तदा ।।
कलिङ्ग मगमद् भूयो ।
"भानुमत्यु"षितं पुरा ।। ४४ ।।

कलिङ्ग राज स्तच्छ्रुत्वा ।
स्मृत तत्पूर्व विक्रमः ।।
"सु-प्रियाया"श्च सम्बन्धात् ।
सु-स्वागत परोऽभवत् ।। ४५ ।।

सुवर्णाऽऽभूषणैर्युक्तान् ।
गजानश्वान् मनोरमान् ।।
समर्प्य वश्यतां स्वच्छां ।
स्वीचकार समादरात् ।। ४६ ।।

ततः सेनां समादाय ।
रत्नान्यादाय भूरिशः ।।
"अङ्गदेश"स्य मुख्याऽङ्गम् ।
"चम्पा-पुर" मभूषयत् ।। ४७ ।।

तत्रत्यैः नागरैः श्रेष्ठैः ।
कृताऽनेक समर्हणः ॥
मनसाऽश्लाघयत् स्वीयाम् ।
राजनीतेः पवित्रताम् ॥ ४८ ॥

तत्रत्य-शासनं प्रेक्ष्य ।
सु प्रसन्नोऽत्यभूद्वसुः ॥
रक्षणायाङ्गदेशस्य ।
सर्वं द्रव्यं समर्पयत् ॥ ४९ ॥

चम्पापुरीं प्रसन्नास्याम् ।
कृत्वा दिग्विजये रतः ॥
सन्देशं प्रेषयामास ।
दिग्जयस्य गजाह्वये ॥ ५० ॥

"उत्कला"न्सोत्कलः पश्यन् ।
स्वाऽवलोकन-सन्नतान् ॥
मध्य-प्रदेशमगमत् ।
"कुन्तिभोज"-प्रशासितम् ॥ ५१ ॥

तं स्व-जन्म-भुवं ज्ञात्वा ।
अश्व नद्यास्तटात् किल ॥
नर्मदा-दक्षिणे तीरे ।
सैन्यमुग्रं न्यवेशयत् ॥ ५२ ॥

शिशुपाल-विहीनां ताम् ।
"चेदीं" कृत्वा व्युपेक्षिताम् ॥
पाण्ड्यान् विमर्दयन् सर्वान् ।
"मद्रदेश" मुपागमत् ॥ ५३ ॥

सर्वतः पर्वताऽऽकीर्णम् ।
दस्युभिश्च निषेवितम् ॥
"शल्य"-संकीर्ण-सन्मार्गम् ।
क्रूर-कानन-वेष्टितम् ॥ ५४ ॥

दुष्टं धूर्ततयोपेतम् ।
प्रपतद् राजनीतिकम् ॥
शाकल्य-नगरं तस्य ।
राजधानीमुपाऽऽगमत् ॥ ५५ ॥

सारथ्य-कर्म-निपुणः ।
भटम्मन्योऽपि मन्त्रिभिः ॥
विदिताऽखिल वृत्तान्तः ।
"शल्यः" शल्यमिवाऽभवत् ॥ ५६ ॥

महाभिमान-सम्पन्नः ।
सैनिकैरुद्भटैः सह ॥
निर्ययौ स्वपुराच्छीघ्रम् ।
रोद्धुं कर्णम् महाबलम् ॥ ५७ ॥

कर्णः प्रागेव "शाकल्यम् ।
दक्षिणोत्तर भागयोः ॥
अवारुन्धदनीकिन्या ।
प्रतिपक्षिभयङ्करः ॥ ५८ ॥

आयान्तं शल्यमुद्वीक्ष्य ।
मनःशल्यं मही-भृताम् ॥
सज्जितं स्वेन युद्धाय ।
दध्मौ शङ्खं महास्वनम् ॥ ५९ ॥

विमुञ्चन्निशितान् बाणान् ।
शल्य-शैले मदोद्धते ।।
आर्द्राऽऽलिङ्गित सद्गात्रः ।
कालमेघ इवाऽभवत् ।। ६० ।।

"शत्रुञ्जयो"ऽपि तद्भ्राता ।
गृहीतोद्भट सैनिकः ।।
मद्र-राज-महासैन्यम् ।
पशुमारममरयत् ।। ६१ ।।

कर्ण-सूर्य-कराक्रान्तम् ।
नश्यद् भट-महाजलम् ।।
शान्त-शस्त्र-तरङ्गाभम् ।
मद्र-सैन्य-सरोऽभवत् ।। ६२ ।।

धनुष्प्रत्यञ्चया शीघ्रम् ।
शल्य-कण्ठं प्रपीडयन् ।।
चकार विजयोद्घोषम् ।
मद्रराजाऽनुमोदितम् ।। ६३ ।।

ततो युद्धात्समानीतम् ।
रथाऽश्वगज संकुलम् ।।
सर्वशस्त्राऽस्त्र-संघातम् ।
आत्मसादकरोद् "वसुः" ।। ६४ ।।

शाकल्य नगरं स्वीय- ।
विजय स्तम्भमण्डितम् ।।
कृत्वा चलत्ततोऽस्त्य- ।
सेवितां सुदृशां दिशाम् ।। ६५ ।।

गोदावरीमतिक्रम्य ।
ऋष्यमूकमनुव्रजन् ।।
रत्नाकर तट प्रान्ते ।
सैन्य-विश्रान्ति माचरत् ।। ६६ ।।

एला-लवङ्ग-खर्जूरी ।
नारिकेलैः समावृतम् ।।
पूगीभिः कदलीभिश्च ।
महोदधि-तटं बभौ ।। ६७ ।।

"रामेश्वरं" प्रणम्याऽथ ।
"सेतुं" समवलोकयन् ।।
अनुस्मरन् पूर्वजन्म- ।
प्रसङ्गं व्यचरत्तटे ।। ६८ ।।

जयोन्मत्ताः प्रसन्नास्याः ।
गर्विताश्चाऽस्य सैनिकाः ।।
परस्परं हसन्तश्च ।
नारिकेलाऽऽसवं पपुः ।। ६९ ।।

"राक्षसेन्द्रः" प्रसन्नेन ।
समुद्रेणाऽऽशु सूचितः ।।
रत्नोपहारान् विपुलान् ।
आगत्याऽस्मै समर्पयत् ।। ७० ।।

दिशो रामालि-रोमाल्याः ।
विजयं समसूचयत् ।।
नागाह्वये पुरे रम्ये ।
सर्वेषां रोमहर्षणम् ।। ७१ ।।

केरली-केशपाशानाम् ।
सुषमां परिलोकयन् ॥
आजगाम विदर्भान् सः ।
दाक्षिणात्यैर्नृपैर्नुतः ॥ ७२ ॥

"दमयन्तीन्दुमत्यो"श्च ।
"रुक्मिण्या"श्चैव सम्प्रति ॥
सौन्दर्याऽतिशयाऽऽख्यानैः ।
परिवर्द्धित-गौरवान् ॥ ७३ ॥

"कुण्डिनं" प्राऽऽगमत् कर्णः ।
पुरं सौराज्य-संयुतम् ॥
यादवेन्द्र-पदाक्रान्तम् ।
वैदर्भी-रीति-शोभितम् ॥ ७४ ॥

"शल्य"-निग्रह-संयुक्ताम् ।
श्रुत्वाऽस्य वीरता-कथाम् ॥
"भीष्मका"दि नृपाः सर्वे ।
चक्रुः सु-स्वागतं महत् ॥ ७५ ॥

विजितं मेनुरात्मानम् ।
विनैव, समरेण ते ॥
प्रसन्नाः अर्पयामासुः ।
गजाऽश्वान् रत्न-सम्पदम् ॥ ७६ ॥

पश्चिम-द्वीप-दीपानाम् ।
प्रभयाऽसौ समर्चितः ॥
तत्रत्यान् स्व-वशं निन्ये ।
धनुष्टङ्कार-विभ्यतः ॥ ७७ ॥

पताकिनीःपरावृत्य ।
यदु-पुङ्गव-शासिताम् ।।
द्वारकां समुपेयाय ।
सर्वलोकेषु विश्रुताम् ।। ७८ ।।

"श्री"कृष्णे" कुत्रचिद् याते ।
उग्रसेनः स-बान्धवः ।।
वस्त्राऽऽभूषण रत्नानि ।
वहून्यस्मै समर्पयत् ।। ७९ ।।

ततो निवृत्य सैन्येन ।
मत्स्य-सीमानमाविशत् ।।
"विराटस्योग्रतां वीक्ष्य ।
राज-धानीं समाक्रमत ।। ८० ।।

निपातित वृहत्सैन्यम् ।
परिपीडित कीचकम् ।।
बबन्ध सुदृढैः पाशैः ।
विराटं वश्यतां गतम् ।। ८१ ।।

तदर्पितानि रत्नानि ।
समादायाऽति गौरवात् ।
"पश्चिमां विजितां काष्टाम्" ।
कुरुश्रेष्ठमसूचयत् ।। ८२ ।।

महत्या सेनया युक्तः ।
मथुरां दूरतो नमन् ।।
सिन्धु-राज्यमनुप्राप ।
जयद्रथ-दिदृक्षया ।। ८३ ।।

दिनत्रयञ्च विश्रम्य ।
प्राप्त भूरि समर्हणः ॥
"दुःशालां सम्प्रतोष्याऽसौ ।
"पञ्चाम्बु" देशमाययौ ॥ ८४ ॥

पीडितां जनतां दृष्ट्वा ।
वैदेशिक-विघूर्णितैः ॥
नृपैरुग्रैः खलैश्चैव ।
व्यर्थ-पार्थक्य-पोषकैः ॥ ८५ ॥

निर्बलेषु तदातङ्कान् ।
मूलतश्च निवारयन् ॥
अखण्डम् भारतं कर्तुम् ।
अधिज्यं विदधे धनुः ॥ ८६ ॥

शरैर्निभिन्न सद्गात्राः ।
स्वार्थ-सिद्धि-परायणाः ॥
निष्प्राणाः विहितास्तेन ।
सर्वे आतङ्कवादिनः ॥ ८७ ॥

जटा-श्मश्रु-समाकीर्णैः ।
तेषां मुण्डैरिवाऽभवत् ॥
मधुभिर्माक्षिकैः पूर्णा ।
'सर्वा' पञ्चनदस्य भूः ॥ ८८ ॥

तमेक सूत्रितं कृत्वा ।
दुष्टता-रहितं तथा ॥
सौहार्देन श्रमेणाऽपि ।
देशोन्नतिमशिक्षयत् ॥ ८९ ॥

इत्थं पञ्चनदं कृत्वा ।
निज-कर्मसु संरतम् ॥
"कुवेरा"ऽऽचरितामाशाम् ।
अगमत्सेनयाऽन्वितः ॥ ६० ॥

गगन-स्पर्द्धि शिखरं ।
हिमानी व्याप्त मस्तकम् ॥
पूर्वं पश्चिम विस्तारम् ।
"गिरि-राज" मुपागमत् ॥ ६१ ॥

उपत्यकासु रम्यासु ।
वाताऽनुकूलितासु च ॥
सेनानां जय-दृप्तानाम् ।
शिविराण्याश्वकारयत् ॥ ६२ ॥

कट-कण्डूरपाकर्तु म् ।
तद्गजैर्मद-विह्वलैः ॥
प्रर्घषित त्वचो दुग्धम् ।
सुस्र् वुर्देव दारवः ॥ ६३ ॥

दिव्यौषधि प्रदीपासु ।
दिव्य रत्नाङ्कुरासु च ॥
सोमवल्ली रसैस्तृप्ता ।
तत्राऽऽसन्नस्य सैनिकाः ॥ ६४ ॥

सद्गन्धैः केसरैर्व्याप्तम् ।
काव्य - सौन्दर्य - चर्चितम् ॥
रमणी - रम्यता - रम्यम् ।
प्रदेशे षूच्चतो गतम् ॥ ६५ ॥

स्फुटन्निर्झर - निर्घोषम् ।
प्रपातोद्दाम सम्पदम् ॥
फल-पुष्प-विशेषाढ्यम् ।
"कश्मीर" मगमत्पुनः ॥ ९६ ॥

प्राप्त भूयिष्ठ सत्कारः ।
कश्मीरेश्वर पूजितः ॥
कम्बोजान् केकयान् दृप्तान् ।
गन्धारानाक्रमत्पुनः ॥ ९७ ॥

तत्रत्य-भूपैर्युद्धेषु ।
स्वीकृताऽऽत्मपराजयैः ॥
समर्पितोपहारैश्च ।
गन्धर्वान् जेतुमाययौ ॥ ९८ ॥

चित्र सेनाऽऽदि गन्धर्वाः ।
दुर्योधन - निषूदकाः ॥
विघर्षिताः किलानेन ।
पशुमारञ्च मारिताः ॥ ९९ ॥

तच्छ्रुत्वा कदनं यक्षाः ।
सर्वे शस्त्राऽस्त्रपाणयः ॥
रक्तनेत्राः सुदष्टौष्ठाः ।
एनमाक्रान्तुमुद् ययुः ॥ १०० ॥

सः कङ्कपक्ष-नाराचैः ।
पीडयन् यक्षकाऽधमान् ॥
पलायन परान्चक्रे ।
कैलासोन्नत सानुषु ॥ १०१ ॥

श्रुत्वेदम् यक्ष-राजेन ।
कुवेरेण प्रसादितः ।।
महार्हरत्नैः संल्लापै ।
रप्सरोभिश्च मानितः ।। १०२ ।।

तिग्मरश्मि-सुतः श्रीमान् ।
द्रष्टुं "साम्ब-शिवं" ययौ ।।
मानसं रावण-प्रेष्ठम् ।
केदारं बदरीश्वरम् ।। १०३ ।।

गङ्गा-यमुनयोश्चाऽपि ।
प्रोद्गमं साधु-संगतम् ।।
प्रयागे "विष्णु-देवस्य"- ।
महायज्ञं चकार सः ।। १०४ ।।

अतः "कर्ण-प्रयागे"ति ।
विवुधैः परिगीयते ।।
ततो नेपाल-" "भूतानौ" ।
सीमान्तम् चोत्तरं ययौ ।। १०५ ।।

सर्वम् सु-रक्षितं दृष्ट्वा ।
श्रुत्वा चीनस्य कल्कलम् ।।
"त्रिविष्टप" कथोपेतम् ।
चीन देशं समभ्यगात् ।। १०६ ।।

तस्य दुर्नीतिमुद्वीक्ष्य ।
सीमान्ताऽऽक्रमणाऽन्वयाम् ।।
शङ्खमुद्घोष्य युद्धाय ।
बाणान् धनुषि सन्दधे ।। १०७ ।।

पूर्वमेव कृतोद्योगः ।
"चीन-भूपः" स-सैनिकः ।।
संघर्षम् कलयामास ।
कृतान्त-प्रतिमूर्तिना ।। १०८ ।।

तत्र युद्धमभूत्तीव्रम् ।
सर्वलोक भयङ्करम् ।।
प्रक्षेपणाऽस्त्र निर्गच्छत् ।
ज्वाला-लीढोरु सैनिकम् ।। १०९ ।।

ततः कर्णधनुः, सद्यः ।
आग्नेयाऽस्त्राणि सम्वमत् ।।
ददृशे; तैश्च सन्दग्धाश् ।
चीन-योधाः प्रदुद्रुवुः ।। ११० ।।

चीने स्व-विजय स्तम्भम् ।
स्थापयित्वा रवि-द्युतिः ।।
तत्रत्य-युद्ध-सम्भारान् ।
रत्नान्यादाय सैनिकैः ।। १११ ।।

चीनेशं कृतवान् वीरः ।
भारतस्य वशंवदम् ।।
प्रतिवर्षम् चकाराऽसौ ।
स्वस्य चैव कर-प्रदम् ।। ११२ ।।

किरात-हूण-यवनाः ।
समाप्ता श्चोत्तरोत्तरम् ।।
विलयी-कृत-राज्यास्ते ।
अवशिष्टाः कृताः वशे ।। ११३ ।।

अन्येचाऽपि कृताः सर्वे ।
द्वीप-रूपाः द्विपोत्तमाः ॥
शीर्षेषु रोपितस्तेषाम् ।
"जयस्तम्भो" वराङ्कुशः ॥ ११४ ॥

एवं विश्वैक वीरेण ।
समस्ते राष्ट्र मण्डले ॥
नाम मुद्राऽङ्ि्कता तेन ।
सद् भावेन प्रवर्तितुम् ॥ ११५ ॥

एवं "दिग्विजयी कर्णः" ।
आदाय चतुरङ्गिणीम् ॥
अतुलाभिश्च सम्पद्भि ।
राजगाम गजाह्वयम् ॥ ११६ ॥

दिग्जयोद्धत शङ्खस्य ।
नादः सर्वत्र विश्रुतः ॥
रण-वाद्य-ध्वनिर्मञ्जुः ।
शुश्रुवे सकलैस्तदा ॥ ११७ ॥

ततः सुयोधनः सर्वान् ।
कौरवान् नागराँ स्तथा ॥
ययौ सत्कार-सम्भारा- ।
नादायास्य च सन्मुखम् ॥ ११८ ॥

सिंह द्वारे च सर्वेषां ।
सम्यक् स्वागतमाचरत् ॥
आलिलिङ्ग च बाहुभ्याम् ।
कृत दिग्विजयं "वसुम्" ॥ ११९ ॥

विदुरस्याऽऽश्रमे कुन्ती ।
मुनि कन्याभिरौरसम् ।।
सुतम् नीराजयामास ।
तिलकाञ्चित मस्तकम् ।। १२० ।।

प्रसन्नास्या पृथुश्रोणी ।
जयिनं कान्तमागतम् ।।
अलञ्चकार तद्वक्षो ।
"वृषाली" जय-मालया ।। १२१ ।।

ततश्च "सुप्रिया" मत्ता ।
मत्त-मातङ्ग-गामिनी ।।
अर्चयामास तं गन्धैः ।
दीपैः पुष्पैः सुगन्धिभिः ।। १२२ ।।

ततः सैन्य-समूहेन ।
नाराचाऽऽकारधारिणा ।।
विलसच्छ्रवणोत्तन्सः ।
विवेश गजसाह्वयम् ।। १२३ ।।

कृत शृंगार सज्जाभिः ।
नागरीभिर्गृहे गृहे ।।
मुक्त पुष्पैरवाकीर्णः ।
वसन्त इव सम्बभौ ।। १२४ ।।

राज-मार्गे धृतश्रद्धैः ।
पण्याजीवैः कृतार्हणः ।।
कृत-दृष्टि-प्रसादोऽयम् ।
राज-मन्दिर माप्तवान् ।। १२५ ।।

भीष्मश्च धृतराष्ट्रश्च ।
कृप-द्रोणौ शुभाशिषौ ।।
शतपुत्रा च गान्धारी ।
अभिनन्दितुमुद्यताः ।। १२६ ।।

प्रणम्य पितरौ भक्त्या ।
साऽनुज स्तनपैः सह ।।
"कश्यपा"ऽदिति-संदृष्टः ।
"महेन्द्र" स्योपमां दधौ ।। १२७ ।।

ततः पितामहः प्रीतः ।
राधामधिरथं तथा ।।
उवाच राज-नीतिज्ञः ।
सर्वेषामपि शृण्वताम् ।। १२८ ।।

समस्तैः पाण्डवैः पूर्वम् ।
"राजसूये" न यत्कृतम् ।।
तत्सर्वमधिकञ्चाऽपि ।
कर्णेनैकेन तत्कृतम् ।। १२९ ।।

दिग्विजेता भवत्पुत्रः ।
धनुर्वेद-विशारदः ।।
करदीकृत-भूपालः ।
प्र-वीरेभ्यो विशिष्यते ।। १३० ।।

तत्पश्चात्सः समुत्थाय ।
विलुलत्कर्ण-भूषणः ।।
प्रतिहारी-समादिष्टम् ।
शुद्धान्तः पुरमाययौ ।। १३१ ।।

"वृषाली"-"सुप्रिया"-जुष्टो ।
बलिष्ठै स्तनयै-र्युतः ॥
"रोहिण्या"-"तारया"-युक्तो ।
रेजे पूर्णो यथा शशी ॥ १३२ ॥

राजसूये समुत्पन्नम् ।
दुर्योधन शुचम्पराम् ॥
अपाकर्तुं वसन्तेऽस्मिन् ।
"वैष्णवं" यागमाचरत् ॥ १३३ ॥

यजनेऽस्मिन् "महाविष्णोः"- ।
विभूती रतिपावनीः ॥
द्रव्यैः समर्चयामास ।
वेद-मन्त्रैश्च वन्हिषु ॥ १३४ ॥

अरक्तपातमक्रोधम् ।
पशूनां हिन्सनं विना ॥
महर्षि-गण-सम्पूर्णम् ।
यजनं सुतरां बभौ ॥ १३५ ॥

आसूपं पायसान्तञ्च ।
सदन्नं घृत-पूरितम् ॥
पवित्रं श्रद्धयोपेतम् ।
सर्वान् सर्वत्र भोजितम् ॥ १३६ ॥

गवां हिरण्य-रत्नानाम् ।
वस्त्राणां भूमि-सम्पदाम् ॥
यथेच्छं दक्षिणा दत्ता ।
दान-वीरेण याज्ञिकी ॥ १३७ ॥

वसोर्द्धारां समिद्धाऽग्नौ ।
पातयन् श्रद्धयाऽन्वितः ॥
कुर्वंश्च यजनं पूर्णम् ।
कवची कुण्डली बभौ ॥ १३८ ॥

एवं दिग्विजयी नृपो रविसुतस्तम् "सूर्य-सूयम्" मखम् ।
निर्विघ्नञ्च समाहरत् सुमनसा सद्भारते "भारते" ॥
विश्वस्मिन्नपि राजनीति-विषये विश्वे च सर्वाऽतिगः ।
रेजे चानुदिनम् दिगन्त-वसुधा-चक्रस्य शक्रः स्वयम् ॥ १३९ ॥

॥ श्री कर्ण-दिग्विजयोनाम चतुर्दश-सर्गः समाप्तः ॥

---

॥ श्रीः ॥

# दिव्याऽस्त्रिकन्नाम पञ्चदशः सर्गः

निर्वर्त्य राजा; क्रतु-राजमेवम् ।
प्र-दक्षिणम् तम् किल "सूर्य-सूयम्" ॥
संस्थाप्य धर्मम् जगती-तलेऽस्मिन् ।
दारिद्र्य-दारिद्र्यमयम् चकार ॥ १ ॥

आर्द्राऽर्ककाले खलु वारिदानाम् ।
जल-प्रवर्षत्वमसौ विलोक्य ॥
दरिद्र-दीनेषु च याचकेषु ।
चकार शश्वद् द्रविणस्य वर्षम् ॥ २ ॥

वैदूर्य-माणिक्य-मणि-प्रवाल- ।
पुष्-राज-युग्हीरक मौक्तिकानि ॥
गजाऽश्व दासी-रथ-भू-गृहाणि ।
दत्तानि हेमाम्बर-राजितानि ॥ ३ ॥

तच्छाशने यौवन-शालिनीनाम् ।
केशोच्चयाः श्यामलतामुपेयुः ॥
वक्रत्वमासीदपि केवलायाम् ।
शिवोत्तमाङ्गे शशिनः कलायाम् ॥ ४ ॥

उल्लङ्घनं श्रौतपथस्य नित्यम् ।
विलासिनीनाम् नयनान्यकुर्वन् ॥
अन्योऽन्य-संघर्ष रतौ सदाऽऽस्ताम् ।
भृशं कुचावेव कृशोदरीणाम् ॥ ५ ॥

निषेध-वर्णान्त-निपात-लोपाः ।
दृष्टाः जनैर्व्याकरणे तथैव ।।
समस्त-शब्देष्वपि केवलेषु ।
सु-विग्रहाः दृग्ग्रहतामुपेयुः ।। ६ ।।

उच्चत्व-नीचत्व-भिदा-विचारः ।
जातोग्रहेष्वेव न मानवेषु ।।
तथा च सोमाऽमृत पान-लिप्सा ।
आसीत् सुराणां न नृणाम् समाजे ।। ७ ।।

आसन्नऽसज्ं खलु मानभङ्गाः ।
मनः सु कामाऽऽतुर मानिनीनाम् ।।
तथाऽवलोक्यन्त विमान-भङ्गाः ।
भृशं नियुद्धेषु च केवलेषु ।। ८ ।।

आतङ्क आसीदपि केवलस्य ।
यूनां गणे काम शरासनस्य ।।
प्रताड़नाऽश्रावि च दण्डकेन ।
घण्टा गृहेष्वेव घटी-कुलस्य ।। ९ ।।

कूपे निपातः सततं तदाऽऽसीत् ।
पाशाऽन्वितो हेम महाघटानाम् ।।
दाहस्तदा तत्र समन्त्रभावि ।
काम-ज्वरस्यैव मनःसु यूनाम् ।। १० ।।

दन्तक्षतानां रचना तदाऽभूत् ।
बिम्बाधरेष्वेव विलासिनीनाम् ।।
एवम् नखाऽङ्कान्यवलोकितानि ।
नितम्बिनीनां कुच-मण्डलेषु ।। ११ ।।

सुतीक्ष्णताऽभूत् खलु सैनिकानाम् ।
कृपाण-धारासु न मानवीषु ।।
क्षाराणि चासन् लवणान्यपीत्थम् ।
मनांस्युदाराणि न मानवानाम् ।। १२ ।।

माया-प्रपञ्चस्य तदा किलैवम् ।
निरक्षरत्वम् नितरां बभूव ।।
सर्पेषु सर्वत्र भय-प्रदेषु ।
द्विजिह्वताऽऽसीत्खलु केवलेषु ।। १३ ।।

एवम् महात्मा वसुधा-सुधांशुः ।
शीर्ष-स्थितोऽप्यस्त्र विदा जगत्सु ।।
ब्रह्माऽस्त्र लाभाय च जामदग्न्यात् ।
रामाद् दिनेष्वेषु मनश्चकार ।। १४ ।।

तस्याऽऽश्रमोऽराजत मध्य भागे ।
प्रोच्चैर्महेन्द्राचल पर्वतस्य ।।
समन्ततः काम दुधां समूहैः ।
फलान्वितानाम् लसितस्तरूणाम् ।। १५ ।।

युद्धाय सामुख्यमुपागतत्वात् ।
शिष्यस्य भीष्मस्य च; राजकेभ्यः ।।
शस्त्राऽस्त्र शिक्षा-विनिवृत्त कामः ।
"राम" स्तदानीमकरोत्तपस्याम् ।। १६ ।।

सूर्यात्मजो "वायु-जितं" सदश्वम् ।
अन्वर्थ नामानमुपानिनाय ।।
विन्यस्य पुत्रेषु च राज्य-भारम् ।
क्षिप्रं महेन्द्राऽचल सन्मुखोऽभूत् ।। १७ ।।

हयोत्तमो वायु-समानवेगः ।
पुराणि रम्याणि वृहद् वनानि ।।
विलङ्घ्य पुष्पाऽन्वित पल्लवानि ।
पूर्वोत्तर-प्रान्त-भुवम् विवेश ।। १८ ।।

विभूषितः सत्कवचेन तेन ।
ताभ्यां चलाभ्यां कल कुण्डलाभ्याम् ।।
अवेक्षितः प्रान्त जनैः स-तृष्णैः ।
चचार सद्भावमुपत्यकासु ।। १९ ।।

ततः सदश्वः स खुराग्र घातैः ।
शिलोच्चयाँस्तान् सुतरां विमर्दन् ।।
अधित्यकासु प्रवरासु तस्य ।
समारुरोह प्रखरः क्षणेन ।। २० ।।

पुष्प-द्रुमैः पुण्य-मृग-द्विजैश्च ।
सर्वर्तु लभ्यैः कुसुमैः फलैश्च ।।
विभिन्नवाचैश्च पतत्रि-वर्गैः ।
मत्त द्विरेफैः कृत-विभ्रमैश्च ।। २१ ।।

संशोभितं शीतल वारिपूर्णैः ।
जलाशयैः कञ्जलता-समेतैः ।।
कारण्डवैः सारस-चक्रवाकैः ।
हन्सैश्चकोरैः परिकूजितञ्च ।। २२ ।।

मन्दार-कुन्दाः कुटजाश्च चूताः ।
पर्याप्त-पुष्पैश्च फलैर्नमन्ति ।।
वाचालिताः यत्र च कोकिलानाम् ।
समाह्वयन्तीव तपस्वि-वर्गम् ।। २३ ।।

"रामस्य" यस्मिन् परशोः प्रहारैः ।
विनिर्गता कच्छप मीनपूर्णा ।।
सु-"ब्रह्मपुत्राख्य" महानदीयम् ।
मदोद्धता शत्रु-कुलं रुणद्धि ।। २४ ।।

सच्छाद्वलाकीर्ण विचित्र मार्गम् ।
महर्षिभिः सेवितमात्तयोगैः ।।
ॐ भूर्भुवःस्वर्ध्वनिभिः प्रपूर्णम् ।
रामाश्रमं ब्रह्ममयं प्रपेदे ।। २५ ।।

तस्माद् बहिः "सुब्रत"-विप्रगेहे ।
अश्वोत्तमं वायुजितं समर्प्य ।।
वस्त्रान्तरैर्विप्र इव प्रतीतः ।
अभ्यन्तरं तस्य समाविवेश ।। २६ ।।

एकत्र भागे मुनि यज्ञ-शालाम् ।
व्यायामशालाञ्च परत्र भागे ।।
प्रसन्न वत्सामपि होमधेनुम् ।
सर्वार्थ दोग्ध्रीं कपिलामपश्यत् ।। २७ ।।

खड्गं च चापं परशून्निषङ्गान् ।
दिव्यान्यनेकानि वराऽऽयुधानि ।।
एकत्र; चान्यत्र हवींषि सोमम् ।
ददर्श हव्यम् समिधः समग्राः ।। २८ ।।

एकत्र चारूणि रणाङ्गणानि ।
अन्यत्र वेदीषु च मण्डलानि ।।
परस्पराऽऽभास्य विरोधमेनम् ।
ददर्श "रामस्य" वरं निवासम् ।। २९ ।।

पिशङ्ग वर्णाग्र जटाकलापम् ।
त्रिपुण्ड भालम् स्पटिकाक्षमालम् ।।
रुद्राक्ष मालामपरां दधानम् ।
शार्दूल चर्मोपरि राजमानम् ।। ३० ।।

कृताग्नि होत्रं किल वैदिकाऽग्नौ ।
विचिन्तितैकेश्वरमिन्द्रियेशम् ।।
जेतारमैशस्य च "षण्मुखस्य" ।
"सहस्रवाह"वन्त करम् ददर्श ।। ३१ ।।

"दिव्यास्त्र-दीक्षां भवतो गृहीतुम् ।
पादारविन्दम्; भगवन् प्रपन्नः ।।
अवैतु मां "विप्र-सुतं विनीतम् ।"
इत्थं निवेद्याऽस्य ननाम पादौ ।। ३२ ।।

कृपालुता-प्रेरित मानसोऽयम् ।
समोऽप्यमं प्रोन्नतमुच्चिकीर्षुः ।।
उत्थापयन् शिष्यधिया कराभ्याम् ।
अस्त्वेवमित्याशु हृदा जगाद ।। ३३ ।।

विनीत भावेन च वर्तमानम् ।
मन्त्राऽनुपूर्व्या विविधाऽस्त्र विद्याम् ।।
मोक्षोपसंहार-विधिप्रयुक्ताम् ।
दिव्याऽति दिव्यां विधिवद् दिदेश ।। ३४ ।।

व्याघ्रत्वचं सम्परिधारयन्तम् ।
सर्वोत्तमं सु-प्रिय-शिष्यमेनम् ।।
ब्राह्मैश्च मन्त्रैरभिमन्त्रितां ताम् ।
ब्रह्माऽस्त्र विद्यां सकलां दिदेश ।। ३५ ।।

आग्नेय बाण-प्रबल प्रयोगे ।
प्रजज्वलुस्तस्य गिरेस्तटान्ताः ।।
ततश्च पार्जन्य-शरेण तत्र ।
सहस्रशः पेतुरमोघधाराः ।। ३६ ।।

वायव्य बाणे चलिते च चापात् ।
छिन्नाः बभूवुश्च घटाः घनानाम् ।।
तथा विमुक्ते किल पार्वताऽस्त्रे ।
जगाम शान्तिम् पवनस्य वेगः ।। ३७ ।।

सर्पास्त्र-सन्धानपरः स कर्णः ।
सरीसृपान् निर्गमिताञ्चकार ।।
कृते च शीघ्रम् गरुडाऽस्त्र योगे ।
जग्मु विषास्त्राः भुजगाः प्रशान्तिम् ।। ३८ ।।

प्रादुश्चकाराऽशनि बाण-वेगात् ।
पाताल मूलात् सलिलस्य धाराम् ।।
तैर्वैष्णवैः पाशुपतैस्तथाऽस्त्रैः ।
आविश्चकार प्रलयस्य दृश्यम् ।। ३९ ।।

सन्धीयमाने सकलान्त कारे ।
ब्रह्माऽस्त्र नाम्नि प्रबले महाऽस्त्रे ।।
चचाल पृथ्वी स-नभः समुद्रा ।
मन्त्रैस्तथाऽसावुप संजहार ।। ४० ।।

निरीक्ष्य दिव्याऽस्त्र महा-समुद्रे ।
पारं गतं विप्र कुमारमेनम् ।।
त्रिः सप्तवारं जगती तलस्य- ।
क्षत्रान्तकारी प्रहसन् जगाद ।। ४१ ।।

वत्स ! प्रसन्नोऽस्मि गुणैस्त्वदीयैः ।
अनन्त शिष्याऽतिग कौशलेन ॥
भविष्यसि त्वम् मदभिन्न तेजाः ।
उद् दृप्त-राजान्तकरो युगेऽस्मिन् ॥ ४२ ॥

अनन्य-साम्येन च जामदग्न्यः ।
वितीर्ण दिव्याऽस्त्र महाप्रसादः ॥
आत्मोपमेयम् प्रियशिष्यमेनम् ।
समस्त-राजान्तकरञ्चकार ॥ ४३ ॥

जगाद भूयो; द्विजपुङ्गवेभ्यः ।
दाता धरायाश्च विभूषितायाः ॥
दृप्ताः नराः शासन-शक्ति-युक्ताः ।
विप्रान् विधिज्ञाँश्च कदर्थयन्ति ॥ ४४ ॥

राज्ञां समाजश्च विचार-हीनः ।
कण्ठ-च्छिदाऽनेन परश्व धेन ॥
सुशिक्षितः प्रागपि तद् द्विजाग्र्याः ।
भाव्यञ्च भू-त्रास हरैर्भवद्भिः ॥ ४५ ॥

यस्यानने वेद चतुष्टयी सा ।
पृष्ठे तथाऽक्षय्य शरौ निषङ्गौ ॥
शापैः शरै श्चाप्युभयैः समर्थः ।
परान्निहन्तुं प्रबलः स विप्रः ॥ ४६ ॥

मुखं पुराऽऽसीद् विबुधो द्विजोऽस्य ।
विश्वस्य सः सम्प्रति सर्व-दासः ॥
भोग-प्रियाणाम् खलु शासकत्वे ।
नश्यन्ति विज्ञान-तपः-क्रियाश्च ॥ ४७ ॥

चरित्र-सत्य-प्रतिभा-युतानाम् ।
अकिञ्चनानामपि पण्डितानाम् ।।
सर्वोच्चतां ज्ञास्यति नैव यावद् ।
तावत्पतिष्यत्यधमः समाजः ।। ४८ ।।

शस्त्राऽस्त्र विद्या परिशीलनाय ।
न क्षत्रियाः एव कृताऽधिकाराः ।।
ते ब्राह्मणा अप्यधिकारिणोऽत्र ।
तपस्विनो येऽनुदिनं यजन्ति ।। ४९ ।।

वीराग्रणीत्वञ्च तपस्विता च ।
शङ्के ममान्ते निगमिष्यतीति ।।
त्वां प्राप्य किन्तु प्रवरं सुशिष्यम् ।
अति प्रसन्नोऽस्मि मया समानम् ।। ५० ।।

हे विप्रसूनो ! सुतरां लभस्व ।
आयुश्च कीर्तिञ्च वरं जयञ्च ।।
करिष्यसि त्वम् पुनरेकवारम् ।
निःक्षत्रियां भूमिमिमां समग्राम् ।। ५१ ।।

सौवर्ण वर्म श्रवणाऽवतन्से ।
दिव्यानि चैतानि बलञ्च दिव्यम् ।।
दिव्याऽस्त्र विद्या ग्रहणे च भक्तिः ।
तपस्विनोऽन्यत्र न सम्भवन्ति ।। ५२ ।।

दिव्यास्त्र विद्यासु परिश्रमेण ।
सर्वम् दिनम् त्वां विनियोजयामि ।।
तपस्वि-रूपेण च केवलेन ।
यथेचितं भोजन मप्यलभ्यम् ।। ५३ ।।

वज्रायिते स्यात् पललं स्वदेहे ।
दोर्दण्ड-युग्मं किल लोह कल्पम् ।।
यदा तदा यौवनमुग्रमुर्व्याम् ।
धनुर्भृतो वै विजयं लभन्ते ।। ५४ ।।

हे पुत्र ! शिष्टोऽस्य धुना ग्रहाण ।
पुष्टि प्रदान्युत्तम भोजनानि ।।
भविष्यतीदं कथमन्यथा ते ।
बलाऽन्वितं भीमतमं शरीरम् ।। ५५ ।।

करे च खड्गः प्रखरो नृपस्य ।
सुवर्ण-रत्नानि वणिग् जनानाम् ।।
शूद्रस्य हस्ते च कला प्रदत्ता ।
विप्रस्य दैवेन शिलोञ्छवृत्तिः ।। ५६ ।।

आस्तामतः पुत्र ! तपस्ययाऽलम् ।
स्वादूनि भोज्यान्युररी कुरुष्व ।।
वार्द्धक्य-योग्यञ्च तपः किलैतद् ।
लभस्व पुष्टि-प्रद-सत्पदार्थान् ।। ५७ ।।

नृपान् समग्रानधमान् पृथिव्याः ।
प्रचण्ड दोर्दण्ड-जितान् विधेहि ।।
सद् ब्राह्मणानाञ्च करेषु सत्तां ।
तदीय-राज्यस्य पुनः प्रदेहि ।। ५८ ।।

एवं गुरोः पूर्ण-कृपामुपेतः ।
शिष्यः स्फुरत्कुण्डलमण्डितास्यः ।।
तत्राऽऽश्रमे पूर्णतया स्वतन्त्रः ।
चकार सेवां विदुषां मुनीनाम् ।। ५९ ।।

प्रागेकदा गां महता श्रमेण ।
व्याघ्रस्य; विव्याध च शब्द-वेधी ।।
"गौस्ते रथाङ्गं निगृहीष्यतीति" ।
तत्स्वामिना शप्त अभूद दोषः ।। ६० ।।

तथाऽधुना तस्य गुरुस्तपस्वी ।
एकान्त-विश्राममयं चिकीर्षुः ।।
जङ्घोपधाने कृत-चारु शीर्षः ।
सुष्वाप निद्रा-परिमीलिताक्षः ।। ६१ ।।

तस्मिन् क्षणे कश्चन कीट-भृङ्गः ।
चकर्त जङ्घां दशनाग्रभागैः ।।
ततः स्रवन्ती रुधिरस्य धारा ।
बभञ्ज निद्रां प्रबलां महर्षेः ।। ६२ ।।

उत्थाय रामः परिवीक्ष्य सर्वम् ।
जगाद शिष्यम् कुपितः क्षणेन ।।
पींडामसह्यां कृमि दंशनोत्थाम् ।
नैव द्विजः सम्प्रसहेत कोऽपि ।। ६३ ।।

नूनम् भवान् भास्वर-कुण्डलाभ्याम् ।
बलेन सौवर्ण-तनुत्र-कान्त्या ।।
सन् क्षत्रियश् छद्म-विनीत-विप्रः ।
ब्रह्मास्त्रमेतद्विफलं तवाऽस्तु ।। ६४ ।।

एवं गुरौ क्रोध-वितीर्णशापे ।
बभाण शिष्यो विनयाऽन्वितः सन् ।।
"अवैतु मां सूर्य-सुतम् किलैकम् ।
क्षत्र-द्विजत्वे च सुदूरमास्ताम् ।। ६५ ।।

वात्सल्यमाप्ते भवतां सुशिष्ये ।
वर्षं द्वयं पुत्र समान-दृष्टे ।।
दिव्याऽस्त्र-योगैः परितोषितोऽपि ।
भवान् नितान्ताऽनुचितं करोति ।। ६६ ।।

निरीक्ष्य तं सूर्य-समान दीप्तम् ।
प्रशान्त रोष-प्रसरो बभाषे ।।
"अहो ! भवान् "कर्ण" इति प्रसिद्धः ।
दिशां विजेताऽङ्गधरा-महेन्द्रः" ।। ६७ ।।

प्रसीद वत्स ! त्वमिहाऽऽगतोऽसि ।
ममैव सन्मान-विवर्द्धनाय ।।
सर्वेषु युद्धेषु लसत्प्रभावम् ।
"ब्रह्मास्त्र" मेतत्प्रकटिष्यतीति ।। ६८ ।।

स्मर्ताऽसि नो केवलमन्तकाले ।
अन्यत्र सर्वत्र जहि स्व-शत्रून् ।।
मच्छिक्षितन्ते सफलं तथाऽस्तु ।
भूयादजेयम् तव पौरुषञ्च ।। ६९ ।।

भीमार्जुनाद्याः सकलाश्च योधाः ।
स्थातुं न शक्ष्यन्ति रणे तवाऽग्रे ।।
यथा महोग्राऽऽक्रमणस्य सर्वे ।
श्येनस्य वृक्षेषु पतत्त्रि-संघाः ।। ७० ।।

विभ्राजतान्ते किल कीर्ति-केतुः ।
दिव्याऽस्त्रवर्गस्य महाप्रयोक्तुः ।।
शिरःसु सर्वत्र महारथानाम् ।
ब्रह्माऽस्त्रतेजः परिभावितानाम् ।। ७१ ।।

ग्रहाण कोदण्ड वरं मदीय ।
मति प्रचण्डं विजयाऽभिधानम् ॥
प्रत्यर्थि-सर्पाऽनल-नक्र-वक्रे ।
उत्तारनावं पृतना-समुद्रे ॥ ७२ ॥

इत्येव मुक्तः श्रवणाऽवतन्सः ।
धनुः प्रदानेन कृत प्रशंसः ॥
आचार्यमेनं शिरसा प्रणम्य ।
प्रत्याययौ "वायुजिता" स्वधिष्ण्यम् ॥ ७३ ॥

विधातृ-सृष्टे नियमाऽनुसारम् ।
सर्वाणि सर्वस्य च सम्भवन्ति ॥
त्रैलोक्य-जेता "दशकन्धरो"ऽपि ।
नैवाऽस्ति भूमावजरामरः सन् ॥ ७४ ॥

ब्रह्मास्त्रादि महोग्रबाण-रचना मोक्षोपसंहार विद् ।
सर्वेषाञ्च महीभृतां कुल-वने दुर्दान्त-कण्ठीरवः ॥
दुर्नीति-प्रहतत्विषां कलिजुषां दुर्विद्विषां भैरवः ।
सर्वैश्चाऽप्यविजेयतां किल दधौ शक्युल्लसत्कौरवः ॥ ७५ ॥

॥ कर्ण-ब्रह्माऽस्त्रलाभो नाम पञ्चदशः सर्गः समाप्तः ॥

---

॥ श्रीः ॥

# "श्रीकृष्ण"-परामर्शोनाम षोडशः सर्गः

वने विचरतां तेषाम् ।
पाण्डवानां चिरायुषाम् ॥
द्वादशाब्दी व्यतीयाय ।
नीति-सौजन्य-शालिनाम् ॥ १ ॥

एकोऽप्यज्ञातवासस्य ।
समोऽति विषमो गतः ॥
समास्त्रयोदशक्लेशे- ।
नैवं तेषां विनिर्गताः ॥ २ ॥

विराटनगरे वीराः ।
बलवीर्य-समन्विताः ॥
कृष्णया सहिताः पञ्च ।
क्षिप्रं प्राकट्य माययुः ॥ ३ ॥

धर्मराजः प्रशान्तात्मा ।
रणं-कर्तुं पराङ्मुखः ॥
सन्धिनैव समाधातुम् ।
"धार्तराष्ट्रै" र्मनोदधे ॥ ४ ॥

"सन्धि-दूतं" चिकीर्षुः सः ।
नीतिज्ञं "मधु सूदनम्" ॥
सम्बन्धिनं द्वयोश्चैव ।
कृतवानत्र निश्चयम् । ५ ॥

ते प्रतस्थुर्विराटस्य ।
नगरा दुत्तरां दिशं ।।
स्व-वृत्तान्तं विवित्सन्तम् ।
श्रीकृष्णं ददृशुः पुरः ।। ६ ।।

"उपप्लाव्य"-पुरे तत्र ।
धर्मराजः सहाऽनुजः ।।
सन्धिदौत्याय सर्वेशम् ।
प्रार्थयामास सादरम् ।। ७ ।।

स्वीचकार हरिस्तेषां ।
सन्धि दौत्याऽनुवन्धिनीम् ।।
प्रार्थनां सचिवैः सार्द्धम् ।
प्रतस्थे च गजाह्वयम् ।। ८ ।।

सः सायं नगरं प्राप ।
भारतानां मनोहरम् ।।
विदुरस्याऽऽश्रमं कुन्ती- ।
शोभितं प्राऽगमत् प्रभुः ।। ९ ।।

विरित्वाऽऽगमनं तस्य ।
कुरुवृद्धाः कृतत्वराः ।।
गन्तुं निवेदयाञ्चक्रुः ।
राज-प्रासादमुत्तमम् ।। १० ।।

मन्द-मन्दं हसन् श्रीमान् ।
प्रातः काले सभाङ्गणे ।।
मिलितुं प्रोच्य सर्वात्मा ।
निशामगमयद् विभुः ।। ११ ।।

अन्येद्यु रुदिते प्राच्या ।
मरुणे सूर्य-मण्डले ॥
कृतनित्यक्रियः कृष्णः ।
सभा-मण्डपमागमत् ॥ १२ ॥

स्वागतानन्तरं श्रीमान् ।
सन्धिदूतः स कौरवान् ॥
धृतराष्ट्र-मुखान् सर्वान् ।
शुभेच्छुः समबोधयत् ॥ १३ ॥

यत्कृतं भवता राजन् ! ।
निर्दोषान् पाण्डवान् प्रति ॥
पुत्र-प्रेमाऽनुरक्तेन ।
त्रिकाले तन्न शोभनम् ॥ १४ ॥

भारतानामिदं राज्यम् ।
पाण्डुना परिवर्द्धितम् ॥
पाण्डवाः धार्तराष्ट्राश्च ।
एक एवेति मन्यताम् ॥ १५ ॥

अद्यावधि कृताः दोषाः ।
त्वदीयैः पाण्डवान् प्रति ॥
तैः सर्वैः सुतरां सोढाः ।
त्रयोदश समाः गताः ॥ १६ ॥

विभाज्यतामिदं राज्य ।
मर्द्धमर्द्धम् विपश्चिता ॥
सुयोधनो विनेयश्च ।
यदीच्छसि शुभं निजम् ॥ १७ ॥

विनैव रक्तपातेन ।
सर्वम् साधु भविष्यति ।।
भारतानाञ्च सर्वेषाम् ।
कल्याणञ्च भविष्यति ।। १८ ।।

इत्युक्त्वा विरते कृष्णे ।
गान्धारी तत्पतिस्तथा ।।
भीष्मश्च विदुरश्चैव ।
हर्युक्तिमन्वमोदयन् ।। १९ ।।

किन्तुक्रोध परीताङ्गः ।
अवतीर्णः स्वयं कलिः ।।
दुर्योधनश्च सूच्यग्र- ।
मात्रं राज्यन्न दत्तवान् ।। २० ।।

एतद्विरुद्धम् श्रीमन्तम् ।
"भगवन्तं" निबन्धितुम् ।।
योजनां रचयामास ।
साऽधिक्षेपमसत्तमः ।। २१ ।।

दृष्ट्वैतदाशु "कालात्मा" ।
साऽट्टहास मुखे स्वेक ।।
तडिदुद्योतनं कुर्वम् ।
बभाषे गतभीः खलम् ।। २२ ।।

दुर्योधन ! सुदुर्बुद्धे !
न मां हन्तुं त्वमर्हसि ।।
यदि त्वमसि सन्नेत्रः ।
पश्य मे रूपमद्भुतम् ।। २३ ।।

केशेषु गगनं पश्य ।
सूर्याचन्द्रमसौ दृशोः ।।
महाकालञ्च हुंकारे ।
भुजयोश्च मरुद् गणान् ।। २४ ।।

ब्रह्म-विष्णु-महेशाँश्च ।
लोक-पालानपि ध्रुवम् ।।
पादयोः पश्य भू-लोकम् ।
भुवर्लोक मिमं हृदि ।। २५ ।।

मस्तके पश्य स्वर्लोकम् ।
सृष्टिञ्च प्रलयं तथा ।।
भाविनं पश्य दुर्बुद्धे !
महाभारत संगरम् ।। २६ ।।

नृपाणां चैव सर्वेषाम् ।
प्राणाऽऽहूतीः प्रदास्यसि ।।
स-भ्रातृकस्य ते राजन् ।
क्षोणी पास्यति शोणितम् ।। २७ ।।

साधूनां त्राण-कर्तारम् ।
दुष्टानाञ्च विनाशकम् ।।
संस्थापकञ्च धर्मस्य ।
पश्य मे रूपमैश्वरम् ।। २८ ।।

हित वाक्यं मदीयञ्च ।
मुमूर्षो ! न त्वयाश्रुतम् ।।
सञ्जीवनौषधं मत्तः ।
न गृहीतं, विगर्हितम् ।। २९ ।।

अतस्त्वम् द्रक्ष्यसि क्षिप्रम् ।
प्रलयं सर्वं भू-भुजाम् ॥
पञ्चग्रामाँश्च सूच्यग्र- ।
मात्रं किञ्चिन्न दास्यसि ॥ ३० ॥

किन्तु दास्यसि राजन् त्वम् ।
पाण्डवेभ्योऽखिलां धराम् ॥
अपि दास्यसि सर्वान्तम् ।
महाभारत सङ्गरम् ॥ ३१ ॥

गोमायु-कङ्क-गृध्रेभ्यः ।
प्रदास्यसि महोत्सवम् ॥
सर्वेभ्यश्चाऽपि राष्ट्रेभ्यः ।
प्रलयं सम्प्रदास्यसि ॥ ३२ ॥

भगवद् भाषणान्ते च ।
बिभ्युः सर्वेऽपि कौरवाः ॥
भू-व्योम-पर्वताः सर्वे ।
दिग्गजाश्चक्रितास्तदा ॥ ३३ ॥

एवं प्रकाश्य सर्वेभ्यः ।
निश्चयं सुदृढं स्वकम् ॥
पाण्डवान् प्रति सामात्यः ।
गमनायोपचक्रमे ॥ ३४ ॥

एवमुद्घोषमाकर्ण्य ।
कृतम् कौरव-संसदि ॥
समग्राः धार्तराष्टाश्च ।
प्रलयं निश्चितं विदुः ॥ ३५ ॥

अागच्छन् भगवान् मार्गे ।
सङ्कुचन्तं स्व-सन्मुखे ।।
अपश्यत्सहसा "कर्णम्" ।
कर्णोत्तन्स-चमत्कृतम् ।। ३६ ।।

तस्य हस्तं समादाय ।
स्व हस्ते "वृष्णि-पुङ्गवः" ।।
रथमारोहयामास ।
स्वयञ्चारुरुहे तदा ।। ३७ ।।

परस्पर कृतालापौ ।
प्रेम्णा तौ वीर-सत्तमौ ।।
समादाय चचालाग्रे ।
स रथो गरुडध्वजः ।। ३८ ।।

शान्ति-क्रान्त्योश्च सन्दर्भे ।
वार्तालापः प्रवर्तितः ।ग
राजनीत्याऽपि संयुक्तः ।
स्वाभाविक मनोरमः ।। ३९ ।।

पाण्डवैर्धार्तराष्ट्रैश्च ।
मनो-मालिन्य-जन्मनि ।।
परस्पर समारब्धे ।
विवादे गगन स्पृशि ।। ४० ।।

अनौचित्यमथौचित्यम् ।
कस्य कस्य च कीदृशम् ।।
सर्वतः प्रथमं द्वभ्या- ।
मिदमेव विचारितम् ।। ४१ ।।

स-सौहार्दमुवाचाऽथ ।
"कर्णम्" कर्णे शनैः शनैः ॥
निर्णायक-स्थितौ तिष्ठन् ।
नयोपेतं वचो हरिः ॥ ४२ ॥

दृष्टम् भ्रातस्त्वया सम्यक् ।
यज्जातं कुरु संसदि ॥
अर्हद् गर्ह्यमानार्यञ्च ।
सुयोधन-विचेष्टितम् ॥ ४३ ॥

एषा पक्ष-द्वयी तात ! ।
समानैव च मत्कृते ॥
तथाऽपि शान्त भावेन ।
जीवनं मे प्रियं मतम् ॥ ४४ ॥

पञ्चानां ग्रामकाणाञ्च ।
प्रदानं वै तिरस्कृतम् ॥
पञ्चानां पाण्डवानाञ्च ।
जीविकाऽपि न चिन्तिता ॥ ४५ ॥

भारतानां न चैकेषाम् ।
सर्वक्षत्र कुलस्य च ॥
मरणञ्च महायुद्धे ।
दुर्निवारं प्रतीयते ॥ ४६ ॥

कोऽप्युपायो न शिष्टो मे ।
नास्ति यश्च निवारयेत् ॥
युद्धं प्रलय संकाशं ।
सर्व-प्राणि-भयङ्करम् ॥ ४७ ॥

दुर्योधनो मदोन्मत्तो ।
न किञ्चिदपि पश्यति ।।
सर्वेषां क्षत्रियाणाञ्च ।
मूलोच्छेदम् विधास्यति ।। ४८ ।।

मृत्युर्वा सर्वराज्यं वा ।
स्यादेकमिति निश्चयः ।।
अस्माकमपि कोदण्डम् ।
सज्यं स्यादिति निश्चितम् ।। ४९ ।।

तदस्मिन् शस्त्र सम्पाते ।
सर्वस्य क्षत्र तेजसः ।।
निर्दोषस्य तटस्थस्य ।
दृश्यते मरणं ध्रुवम् ।। ५० ।।

निष्क्षत्रिया पुनस्तात ! ।
वसुधेयम् नृपोत्तम ।।
समुद्रवसना देवी ।
भवित्रीति विभाव्यते ।। ५१ ।।

तथाऽपि दृश्यते चैकः ।
उपायः शान्ति वर्द्धनः ।।
रक्षकः क्षत्र वंशस्य ।
समराग्नि-प्रशामकः ।। ५२ ।।

त्वां समासाद्य योद्धारम् ।
दिक्चक्र-जयिनं नृप ! ।।
सुयोधनस्य विश्वासो ।
जयाय प्रतिवर्द्धते ।। ५३ ।।

सञ्जीवनं त्वमेवास्य ।
भाग्य-रेखा समुज्वला ।।
जाज्वल्य-मानं नक्षत्रम् ।
विजयस्य त्वमेव हि ।। ५४ ।।

तवोक्तम् नाऽव मन्येत ।
गुरोरिव सहस्रदृक् ।।
तव बाहुबलस्याऽऽशा ।
तेन स्वान्ते विधार्यते ।। ५५ ।।

अतस्त्वम् क्षत्र वंशस्य ।
संहारमुपसंहर ।।
पृथिव्यां प्रलयाऽकाण्ड- ।
ताण्डवं चाऽपि खण्डय ।। ५६ ।।

कुन्त्याः ज्येष्ठः कुमारोऽसि ।
निश्चयेनाऽवधारय ।।
केनाऽपि कारणेन त्वम् ।
सूतवंशे प्रवर्द्धितः ।। ५७ ।।

दुरोदर-प्रियाणां त्वम् ।
सङ्गमुग्रं परित्यज ।।
सहोदराणां रक्षार्थम् ।
मा नाशार्थं धनुर्धर ।। ५८ ।।

सत्यम् परिचिनु क्षिप्रम् ।
सत्यां ते मातरं भज ।।
दुर्योधनस्य दौरात्म्य ।
पूर्णम् प्रेमाऽऽशु सन्त्यज ।। ५९ ।।

पाण्डवाः सोदराः सन्ति ।
निश्चयेन न शत्रवः ॥
"सूर्य-पुत्रो"ऽसि "कौन्तेयः" ।
न "राधेयो" न "सूतजः" ॥ ६० ॥

नायं दोषस्तवाऽत्राऽस्ति ।
एषा भाग्य-विडम्बना ॥
मया सहैव गन्तव्य- ।
मिदानीं सोदरान् प्रति ॥ ६१ ॥

वयं सर्वेऽभिषेक्ष्यामः ।
त्वां साम्राज्ये महाबलम् ॥
शिरस्तेऽलङ्करिष्यामः ।
मुकुटेनोरु वर्चसा ॥ ६२ ॥

धर्म-राजश्च ते भ्राता ।
छत्र-ग्राही भविष्यति ॥
भीमोऽङ्गरक्षकश्चाऽपि ।
प्रहरी चार्जुनस्तव ॥ ६३ ॥

नकुलो सहदेवश्च ।
चामरे ते धरिष्यतः ॥
पाञ्चाली चाऽपि छायेव ।
त्वामेवाऽनु गमिष्यति ॥ ६४ ।

बुद्धिमान् धार्मिकस्त्वञ्च ।
विद्वाँश्च बलवानसि ॥
दयावीरोऽङ्गराजश्च ।
दिग्विजेता महानसि ॥ ६५ ॥

परिवर्तिष्यते दृश्यम् ।
धरा स्वर्गं भविष्यति ।।
वास्तवं चाऽपि ते रूपम् ।
जगदेतच्च वेत्स्यति ।। ६६ ।।

वियुक्तमिव सत्पुत्रम् ।
पृथा पुनरवाप्स्यति ।।
प्रफुल्लिताऽन्तरङ्गाच ।
त्वया सह भविष्यति ।। ६७ ।।

रणस्याऽस्य भयान्मुक्ताः ।
लोकाः सर्वे सुखाऽन्विताः ।।
भविष्यन्ति प्रजाः सर्वाः ।
तव भाग्याऽभिनन्दिनः ।। ६८ ।।

आर्य ! ते च कुरोः राज्यम् ।
साम्राज्यञ्च समर्थ्यते ।।
अङ्गराज ! इदं सर्वम् ।
मही-राज्यम् समर्प्यते ।। ६९ ।।

दानवीर ! ग्रहाण त्वम् ।
एकम् मे देहि याचितम् ।।
कौरवान् त्यज हे भ्रातः ।
युद्धमेतन्निवारय ।। ७० ।।

भाविनश्च भया त्तात ! ।
सर्वां मोचय मेदिनीम् ।।
"कुन्तीं" षट् तनयां भूयः ।
कुरु सर्वमनामयम् ।। ७१ ।।

इत्युक्त्वोपरते तस्मिन् ।
सार गर्भम् नरोत्तमे ।।
चिन्तयामास गम्भीरम् ।
वक्तव्य-विषयं "वसुः" ।। ७२ ।।

कौरवाः वा परित्याज्याः ।
पाण्डवाः वेति निर्णयः ।।
माता, "राधा" "पृथा" वा स्या- ।
दित्यतीव सु दुष्करः ।। ७३ ।।

अनुजत्व दृशा नूनम् ।
कृपामर्हन्ति पाण्डवाः ।।
किन्तु सन्मानकर्ताऽयम् ।
सोदरेभ्यो विशिष्यते ।। ७४ ।।

एवं जन्म-प्रदानेन ।
"कुन्ती" माता न संशयः ।।
लालनात् पालनात् किन्तु ।
"राधा" तस्याः विशिष्यते ।। ७५ ।।

एनं विप्रतिषेधञ्च ।
तोलयामास पण्डितः ।।
जातिवादान्ध नेत्राणाम् ।
व्यङ्ग्य वादान् तथाऽस्मरत् ।। ७६ ।।

कृप-द्रोणादि व्यक्तीनाम् ।
सूतेषु च नृपेषु च ।।
वैषम्य-भूत-ग्रस्तानाम् ।
चरितान्यप्यलोकयत् ।। ७७ ।।

सिंहासनाऽधिरूढेषु ।
पादाग्र दलितेषु च ॥
पृथिव्या काशवद् भेदम् ।
विचार पथ मानयत् ॥ ७८ ॥

सर्वस्याऽस्य समाधानम् ।
विना युद्धमसम्भवम् ॥
जात्या कुलेन दमनम् ।
पौरुषस्याऽप्यसम्भवम् ॥ ७९ ॥

सर्वमेतद्विनिश्चित्य ।
मधुराक्षर-पेशलम् ॥
स्वकीयं दिव्य-सिद्धान्तम् ।
श्रावयामास केशवम् ॥ ८० ॥

सर्वज्ञेन त्वया कृष्ण ! ।
यत्किञ्चिदपि भाषितम् ॥
तत्सर्वम् खलु सत्यस्य ।
परां कोटिम् विगाहते ॥ ८१ ॥

मज्जन्म विषये सर्वम् ।
सूर्य-देवाद् यथाश्रुतम् ॥
भवताऽप्येवमेवोक्तम् ।
ममोपरि कृपालुना ॥ ८२ ॥

सद्यो जातं कुमारं या ।
नारी नद्यां विमुञ्चति ॥
भयेन निन्दया वाऽपि ।
साऽपि माता किमुच्यते ॥ ८३ ॥

कन्याऽपि परिणीताऽपि ।
पञ्च पुत्राऽपि साऽभवत् ।।
किन्तु तच्छिशु कस्याऽस्य ।
कीदृशी दुर्दशाऽभवत् ।। ८४ ।।

"आत्मैव जायते पुत्र": ।
सत्यं वदति चेत् श्रुतिः ।।
पृथया दूषिता किन्तु ।
नारीणाम् मातृता ध्रुवम् ।। ८५ ।।

सूर्य-पुत्रोऽप्यहं भूत्वा ।
गमितः सूत-पुत्रताम् ।।
तयैव राज-मातृत्वा- ।
ऽभिमानिन्याऽपमानितः ।। ८६ ।।

स्पर्द्धायाञ्च कृपाद्यैर्ये ।
व्यङ्ग्य बाणाः विचालिताः ।।
वर्तमानाऽपि सा तत्र ।
कथन्नोचितमब्रवीत् ।। ८७ ।।

विद्धेऽपि मत्स्ये पाञ्चाल्या ।
त्वदग्रे यदुदाहृतम् ।।
तत्राऽपि वर्तमाना सा ।
सत्यं न कथमब्रवीत् ।। ८८ ।।

नव जात शिशु-व्रात- ।
स्व दंष्ट्राग्र-विदंशिनी ।।
नैव माता पृथा किन्तु ।
नूनम् काल भुजङ्गिनी ।। ८९ ।।

गृहे हृते च राज्ये च ।
सर्वस्वे चाऽपहारिते ।।
वन-भ्रान्तेषु पुत्रेषु ।
मां पुत्रीकर्तुमिच्छति ।। ९० ।।

यदि सा पुत्र रूपेण ।
स्व्यकरिष्यच्च मां तदा ।।
पाण्डवाः सह द्रौपद्या ।
नाऽगमिष्यन्वनं ध्रुवम् ।। ९१ ।।

इदानीं पञ्च पुत्रेषु ।
राज्यान्निःसारितेषु च ।।
युद्धाऽनले प्रदीप्ते च ।
मां पुत्री कर्तुमिच्छति ।। ९२ ।।

मम पुण्यचरित्रत्वम् ।
तथा दिग्जयिता च मे ।।
धनुर्धरत्वमुत्कृष्टम् ।
पौरुषञ्चेति जातयः ।। ९३ ।।

"कुन्ती" मम सुखं नैव ।
पाण्डवानाम् जयं च सा ।।
केवलं वाञ्छति क्षिप्रम् ।
वैचित्र्यम् नैव बुध्यते ।। ९४ ।।

कुत्सितश्च समाजोऽय ।
मपश्यन्मां घृणा-दृशा ।।
स एव दिग्जये प्राप्ते ।
इदानीमभिनन्दति ।। ९५ ।।

सूत पुत्रेति दुःशब्दैः ।
अपमान मितस्य च ॥
राधा मातैव मे पूर्वम् ।
मुखाब्जं पर्यचुम्बयत् ॥ ९६ ॥

अतश्च सैव जननी ।
माता चेति सुनिश्चितम् ॥
वात्सल्य-पयसः पानात् ।
सैव सर्वेति निश्चितम् ॥ ९७ ॥

धूलि धूसरिताङ्गञ्च ।
वन्य-पुष्पमिवाऽऽदरात् ॥
अकरोन्मानितं मूर्ध्नि ।
त्यज्यतां किम् ? सुयोधनः ॥ ९८ ॥

पृथया जन्म दत्तञ्च ।
वात्सल्यं राधया तथा ॥
वास्तवं जीवनं किन्तु ।
दत्तवान् सः सुयोधनः ॥ ९९ ॥

"दुर्योधनस्य" सम्पर्का- ।
दुत्तरं सकलं जगत् ॥
"सूत-पुत्रम्" परित्यज्य ।
"सूर्य-पुत्रम्" ब्रवीति माम् ॥ १०० ॥

"अङ्गराजः", "महाराजः" ।
"राज-राजे"ति शब्दितः ॥
यस्य प्रेमाऽमृते स्नातः ।
सः कथं त्यज्यतां मया ॥ १०१ ॥

केवलाऽन्वयिनो दोषाः ।
समाः सर्वत्र सर्वदा ॥
प्रयोजनं न तैः किञ्चित् ।
स्वल्पमस्तीति मे मतम् ॥ १०२ ॥

अद्यावधि च युद्धेषु ।
तस्य मानं सुरक्षितम् ॥
अग्रेऽप्येवं मया कार्यम् ।
सर्वं सत्यं ब्रवीम्यहम् ॥ १०३ ॥

स्पर्द्धायाम् मे नृपत्वेन ।
मान्यता-दानमुत्तमम् ॥
सुयोधनाऽतिरिक्तस्य ।
सर्वस्याऽपि सुदुष्करम् ॥ १०४ ॥

तत्तादृशं नृपश्रेष्ठम् ।
मित्र-श्रेष्ठञ्च सर्वदा ॥
नैव त्यक्ष्यामि संग्रामे ।
घोररूपे उपस्थिते ॥ १०५ ॥

अधुना तं विपत्तीनाम् ।
घटाऽऽटोपे उपस्थिते ॥
कथं त्यक्ष्यामि वार्ष्णेय ! ।
कालानल-भयङ्करे ॥ १०६ ॥

नैवेच्छा मम साम्राज्ये ।
नैव काचिद्धनादिषु ॥
साम्राज्यं चक्रवर्तित्वम् ।
सर्वमस्ति करे मम ॥ १०७ ॥

सर्वेषाञ्च नरेन्द्राणाम् ।
यावत् कोषाऽऽदिके धनम् ॥
तावन्मया च दीनेभ्यः ।
प्रत्यहं प्रवितीर्यंते ॥ १०८ ॥

"राजन्" शब्देन सम्बोध्ये ।
अहमेव च भूतले ॥
अनन्य-लभ्या सम्पत्तिः ।
ममैव वर्तते खलु ॥ १०९ ॥

सुखानि चोपभुक्तानि ।
देव-दानव वन्मया ॥
वर्तितव्यम् भविष्ये च ।
महामानव वन्मया ॥ ११० ॥

अप्रियं वा प्रियं वाऽस्तु ।
रणोद्योगः प्रवर्तताम् ॥
सर्व राजन्य संयोज्यो ।
युद्ध-यज्ञश्च वर्तताम् ॥ १११ ॥

सुवर्णभारं दुःखान्तम् ।
वहन्तेऽन्ये च पुङ्गवाः ॥
विश्राणनञ्च रत्नानाम् ।
कुर्वन्ति नर-पुङ्गवाः ॥ ११२ ॥

मदीया ज्येष्ठता शश्वत् ।
गोपनीयैव तिष्ठतु ॥
पाण्डवेभ्यः सदाकृष्ण ! ।
रहस्यं न प्रकाश्यताम् ॥ ११३ ॥

अन्यथा तु च ते सर्वे ।
प्रदास्यन्ति च मेऽखिलम् ।।
अहं सर्वञ्च दास्यामि ।
पुनर्दुर्योधनाय वै ।। ११४ ।।

क्रमेणानेन सर्वेषाम् ।
महाऽनर्थो भविष्यति ।।
भू-भार-हरणस्याऽपि ।
संकल्पो नैव सेत्स्यति ।। ११५ ।।

त्वदीयमेव तत्कृष्ण ! ।
मतं समनुवर्तितम् ।।
मयाऽपि ज्ञात मेवाऽस्ति ।
"माधवस्य" चिकीर्षितम् ।। ११६ ।।

इत्युक्त्वाऽवतरत् कर्णः ।
रथाद् गरुड-लाञ्छनात् ।।
रणे दर्शन दानाय ।
"श्रीकृष्णं" प्रार्थयन्मुदा ।। ११७ ।।

कर्णस्य मित्रतां पश्यन् ।
मध्वरिरपि विस्मितः ।।
धन्योऽत्यन्त मनन्योऽसि ।
वीर वर्योऽसि "सूर्यज ! ।। ११८ ।।

विक्रान्तो दिग्विजेताऽसि ।
दान-वीरोऽसि भूतले ।।
सौजन्यस्य पराकाष्ठा ।
स्वस्ति तेऽस्तु महारथ ! ।। ११६ ।।

परस्परं प्रशंसन्तौ ।
द्वावप्येतौ नरोत्तमौ ।।
युद्धयज्ञं समायोक्तुम् ।
स्वकीयं पक्षमागतौ ।। १२० ।।

वर्णयामासतुः सर्वम् ।
स्व-स्वकीयञ्च निश्चितम् ।।
कृतवन्तौ प्रवृत्तञ्च ।
स्व-पक्षं संगराध्वरे ।। १२१ ।।

प्रारब्धा तद्दिनादेव ।
भारतस्याऽपि दुर्दशा ।।
अदृश्यत च पुच्छान्तो ।
"धूमकेतु" र्नभस्तले ।। १२२ ।।

संभ्रान्तश्च समाययौ कुरु-कुलं सोऽप्य"ङ्गराजो" भ्रमन् ।
"श्रीकृष्णस्य" विचेष्टितं नय-युतं बद्ध-क्रमं शीलयन् ।।
युद्धायोन्नत निश्चयान् परिवृढानु त्तेजयन् कौरवान् ।
मित्रञ्चैव "सुयोधनम्" नृप-गणाऽऽह्वाने समप्रेरयत् ।। १२३ ।।

।। कर्ण-कृष्ण-परामर्शोनाम षोडश-सर्गः समाप्तः ।।

---

॥ श्रीः ॥

# इन्द्र-भिक्षुर्नाम सप्तदशः सर्गः

एवम् सुमन्त्रैः समराध्वरस्य ।
सम्पन्न दीक्षम् कुरुराजमेनम् ॥
कृत्वा पुनः प्राप्त वसु-प्रतिष्ठः ।
"वसु" र्वसून्य प्रतिमं ववर्षं ॥ १ ॥

दानस्य शश्वत्सरितः कराग्रात् ।
महामहिम्नां महतां स्रवन्ति ॥
दुर्भाग्य कूलानि निपातयन्त्यः ।
सिञ्चन्ति सस्यानि तपोमयानि ॥ २ ॥

त्यजन्ति नद्यः सलिलान्यभीक्ष्णम् ।
मेघाश्च वारीणि तथा निजाऽङ्गात् ॥
ग्रह्णन्ति ते नैव फलानि वृक्षाः ।
लताश्च पुष्पाणि समर्पयन्ति ॥ ३ ॥

एते च सर्वेऽपि पुनर्लभन्ते ।
पूर्वाधिकानि प्र-णवानि तानि ॥
समीपमायान्ति सतां धनानि ।
परोपकाराय न संग्रहाय ॥ ४ ॥

स्तुतिं न कुर्वन्ति जनाः कदाऽपि ।
संग्राहकस्योच्चमपां पयोधेः ॥
सर्वां धरां जीवन दान वर्षैः ।
सन्तर्पयन्तं जलदं स्तुवन्ति ॥ ५ ॥

धन प्रदानैर्धनिनां निधानम् ।
न क्षीणतां गच्छति सत्यमेतत् ।।
प्रबर्द्धते चानुदिनम् नितान्तम् ।
मधाविव क्षीण तनुर्द्रुमाणाम् ।। ६ ।।

कार्पण्यदोषेण युताः धनाढ्याः ।
दारिद्र्य-कूपे सहसा पतन्ति ।।
इहैव तेषां नियतो निपातः ।
परत्र चैषां नरकेषु पातः ।। ७ ।।

रामः शिविर्विप्र-वरोदधीचिः ।
त्रिशंकु-पुत्रश्च रघुः स-पौत्रः ।।
बलिर्नलश्चैव तथाऽपरेऽपि ।
स्मर्यन्त अद्याऽवधि दान-वीराः ।। ८ ।।

ददाति दानं स उदारभावात् ।
प्रकाश-पुञ्जस्य सहस्ररश्मिः ।।
तथा शशाङ्कश्च करोति रात्रौ ।
सु-चन्द्रिकायाः स्वकरैश्च वर्षाम् ।। ९ ।।

निःस्वार्थ मेताः खलु धेनवोऽपि ।
दुग्धं स्वकीयं ददते परेभ्यः ।।
सकोकिलास्ते शुक-सारिकाद्याः ।
वर्षन्ति संगीत-सुखं खगाश्च ।। १० ।।

स्वाभाविको धर्म इहाऽस्ति येषाम् ।
जीवन्ति ते एव जनाः पृथिव्याम् ।।
स्वार्थाऽन्वितास्ते धनिकाः कदर्याः ।
सर्वेमृता एव सुनिश्चयेन ।। ११ ।।

कुर्वन्ति ये वै धनिकाः नितान्तम् ।
दानम् समाजस्य सुरक्षणाय ।।
क्षतञ्च तैः स्वर्ग-धरातलेऽपि ।
आरक्षितं स्थायि-पदं स्वकीयम् ।। १२ ।।

कुर्वन्ति ये स्वोदर-पालनाय ।
द्रव्याऽवरोधम् धनिकाः कदर्याः ।।
रोगाः नृपाः दुष्ट-विटाश्च चोराः ।
धनानि तेषां खलु नाशयन्ति ।। १३ ।।

परोपकार व्रत पालकानां ।
द्रव्यस्य हानिर्नहि शंकनीया ।।
तथैकदा सर्वमपि त्यजन्तः ।
गच्छन्ति लोकाः परलोक-मध्ये ।। १४ ।।

एवं विचार्यैव दिनेश-सूनुः ।
दधार दान-व्रतमेक-निष्ठम् ।।
पूजान्तरं प्राप्य सहस्त रश्मेः ।
"अभ्यर्थिनः" स्वेच्छित मत्र लेभुः ।। १५ ।।

यशः पताकाश्च समस्त दिक्षु ।
दानैक वीरस्य महारथस्य ।।
वैकर्तनस्याऽस्य वदान्यतायाः ।
आकाश मध्ये सततं विरेजुः ।। १६ ।।

कर्णश्च दानञ्च पद-द्वयीयम् ।
अन्योऽन्य पर्यायकतामयासीत् ।।
भाग्येन हीनाः पुरुषाः दरिद्राः ।
अमन्सताऽमुं निजभाग्य धेयम् ।। १७ ।।

विद्वद् वरेण्याः सकलाः धरायाः ।
कर्णेति रम्यामभिधां दधानाः ।।
जिह्वाग्र भागे प्रथमं प्रभाते ।
सम्मेनिरे धन्यतमं निजास्यम् ।। १८ ।।

स-धर्मराजो मधु-सूदनोऽपि ।
विभिन्न रूपस्तमनेक वारम् ।।
सीमान्त-संस्थञ्च वदान्यतायाः ।
संद्रष्टु कामः सुतरां प्रपेदे ।। १९ ।।

उवाच तं पाण्डवमग्रजातम् ।
"औदार्यमाश्चर्य-करं पृथिव्याम् ।।
दारिद्र्य-विद्रावणमर्थिनाञ्च ।
सुवर्ण-रत्नोच्चयमस्य पश्य" ।। २० ।।

स राजसूयोऽपि महान् त्वदीयः ।
न दान-यज्ञस्य तुलां बिभर्ति ।।
महात्मनो दान-रतस्य चास्य ।
दधीचि-मुख्याः न पुरोलसन्ति ।। २१ ।।

ग्रामे पुरे चास्य सुदुःखितेभ्यः ।
द्रारिद्र्य-दैन्यैः परिभावितेभ्यः ।।
रोगाऽन्वितेभ्यो दलित ब्रजेभ्यः ।
दानालयाः सन्ति च भारतेऽस्मिन् ।। २२ ।।

गो-विप्र-देवेषु निरूढ भक्तिः ।
दिगन्त-राजन्य-नमस्य शक्तिः ।।
अनन्य सामान्य धनुष्प्रभावो ।
युष्मां"श्च सर्वान् यशसाऽतिशेते" ।। २३ ।।

अथैकदा नन्दन-कल्प वृक्षान् ।
कर्णस्य कीर्त्या मलिनानवेक्ष्य ।।
स्वर्गस्य वीथीषु सुराऽङ्गनानां ।
संगीत-लास्य-स्वर-भूषितानाम् ।। २४ ।।

गीतानि नित्यं कलकण्ठ-नालैः ।
गीतानि कर्णस्य यशोऽन्वितानि ।।
शुश्राव सौधेषु शची-समेतः ।
साश्चर्यमुच्चेषु सहस्रनेत्रः ।। २५ ।।

अनन्तरं खण्डित-खाण्डवस्य ।
पुत्रस्य वै मध्यम पाण्डवस्य ।।
कर्णम् शरैः प्राण-हरं विशङ्कय ।
भिक्षु-स्वरूपोऽवतरद् धरायाम् ।। २६ ।।

अपश्यदेकं पुरुषं महान्तम् ।
मध्यंदिने भानुमुपासयन्तम् ।।
गाङ्गे जले स्वस्य कटि-प्रमाणे ।
मध्योदधीवोच्चशिखं सुमेरुम् ।। २७ ।।

आशासितं भिक्षुगणै रसंख्यैः ।
सुवर्ण-रत्नानि-धरा-गृहाणि ।।
वस्त्राणि चित्राणि च याचमानैः ।
पर्यावृतं सद्व्रतिनं वरेण्यम् ।। २८ ।।

स्वर्गस्य भिक्षोश्छलना-प्रपूर्त्यै ।
निषेध्यमानं निजजन्मदेन ।।
लसत्तनुत्र-श्रुति-भूषणं तम् ।
कर्णम् विनिश्चित्य ललज्ज शक्रः ।। २९ ।।

श्रेण्यां प्रविश्याऽऽशु च याचकाना ।
मुपाविशत् सज्जित भिक्षु-पात्रः ।।
किम् किम् लघुत्वञ्च न धारयन्ति ।
देवाः अपि स्वार्थं विमूढचित्ताः ।। ३० ।।

सावित्र-मन्त्रस्य जपाऽवसाने ।
तम् भैक्षवं वीक्ष्य महाप्रसन्नः ।।
यथेप्सितैः काञ्चन-रत्न-गेहैः ।
आनर्च तत्सत् जगतामुदारः ।। ३१ ।।

चक्रुस्तदा ते जयनाद मुच्चैः ।
कल्पद्रुमस्याऽस्य दिशां विजेतुः ।।
संकोचमीयुर्विवुधाऽधिपस्य ।
विबृद्ध लज्जस्य दशेन्द्रियाणि ।। ३२ ।।

यथेच्छ सम्प्राप्त मनोऽभिलाषाः ।
ते याचकास्तुष्टतमाः अगच्छन् ।।
किन्त्वेकलः कुञ्ज लतान्तराले ।
तुच्छाशयोऽतिष्ठदसौ स-लज्जः ।। ३३ ।।

प्रकाश पुञ्जान् तमसोऽन्तकारान् ।
पुनर्गृहीतुं नलिनीम् समर्प्य ।।
इयेष पुत्रस्य वदान्यतायाः ।
दृष्ट्वा क्रमं गन्तुमसौ दिनेशः ।। ३४ ।।

कियद् विदूरं भवने लतानाम् ।
नितान्त शुष्कः प्रतिपर्ण राशिः ।।
व्यक्तै रविज्ञात तरस्य पद्भ्याम् ।
तडत्तडच्चेति चकार शब्दम् ।। ३५ ।।

दानव्रती तं सहसा निशम्य ।
उवाच शीघ्रम् परमोच्च वाचा ।।
"कश्चाऽवशिष्टः खलु याचकेषु ।
समक्षमायातु मुदा ममेति" ।। ३६ ।।

वस्त्रान्न-गेह-द्रविणादिकेषु ।
राज्य-प्रिय प्राण-समन्वितेषु ।।
किमप्यपेक्ष्यम् खलु याचनीयम् ।
रिक्तं गृहान्मे न निवर्तनीयम् ।। ३७ ।।

रविः प्रभां चारुविभां शशाङ्कः ।
बलाहकेभ्योऽपि जलं पयोधिः ।।
प्राणञ्च वायुः खलु नैव दद्यात् ।
न सम्भवे दिष्ट महन्न दद्याम् ।। ३८ ।।

ताम् दानवीरस्य गभीर वाचम् ।
निशम्य, चाञ्चल्य-युतः स-पात्रः ।।
समक्षमायात्सहसा निकुञ्जात् ।
अदृश्यतैकः किल छद्मभिक्षुः ।। ३९ ।।

जयोऽस्तु ते प्राग् विजयः पुनश्च ।
यथेच्छमौदार्य-युतं प्रदातुः ।।
श्रुता भवत्कीर्तिरियम् त्रिलोक्याम् ।
न कोऽपि दाता भवता समोऽभूत् ।। ४० ।।

शिवेर्दधीचेश्च बलेः रघोश्च ।
नृगस्य तुल्या भवतः प्रतिष्ठा ।।
"मृत्युञ्जयत्व"ञ्च विशिष्यते ते ।
धन्या भवद् भाग्य परम्परेयम् ।। ४१ ।।

एकेन पूर्वम् विजिताः समस्ताः ।
दिशश्च गायन्ति यशस्त्वदीयम् ।।
धन्यं तथेदम् कवचं त्वमेद्यम् ।
स्तुत्ये त्वदीये कल-कुण्डले च ।। ४२ ।।

इत्थं कुभिक्षोर्वचनाऽवसाने ।
कर्णाऽवतन्सौ चलयन् बभाषे ।।
"कर्णः" कुयाञ्चा-विकृताऽस्य वर्णम् ।
स्ववर्णमय्युच्चभवत्कु-वर्णम् ।। ४३ ।।

आस्तामिदम् याचक ! भाग्य-चर्चा ।
मे पौरुषं भाग्य परम्पराऽस्ति ।।
भुजौ तथाऽनन्यबलौ प्रलम्बौ ।
तत् काल-कोदण्डमधिज्यमेव ।। ४४ ।।

श्रुत्वैवमेवं वचनं वसूक्तम् ।
महेन्द्र-भिक्षुः पुनरप्युवाच ।।
अभ्यर्थितं मे विफलं यदि स्यात् ।
कीर्ति स्तदा ते पतिता किल स्यात् ।। ४५ ।।

अतो वरं मद् गमनं नरेद्र !
नाभ्यर्थनीयं हि मया भवत्तः ।।
यथाऽऽगतं चात्र तथैव यामि ।
नाहम् भवन्तं निरयं नयामि ।। ४६ ।।

इतीदृशै रुत्पट वाक्य-जालैः ।
पितुर्नि-देशम् मनसा विचिन्त्य ।।
निश्चित्य मायाविनमाशु शक्रम् ।
जगाद गम्भीर-गिरा मनस्वी ।। ४७ ।।

नरोऽसि, वा देववरोऽसि, कश्चित् ।
मद्द्वारमागत्य विनैव दानम् ।।
न गन्तुमर्हस्यतिथे ! कदाऽपि ।
तद् ब्रूहि शीघ्रम् स्वमभीष्ट वस्तु ।। ४८ ।।

विनीतमेवं वचनैर्निवेद्य ।
स्वर्गस्थ-भिक्षुः स्वकरौ प्रसार्य ।।
ययाच दिव्यम् कवचं तदीयम् ।
देदीप्यमाने कल कुण्डले च ।। ४६ ।।

श्रुत्वेति याञ्चाम् छलना-समेताम् ।
विद्युत्प्रपातेन समां सहिष्णुः ।।
चचाल किञ्चिन्नहि दान-धर्मात् ।
निवारितोऽपि प्रसभं स्व-पित्रा ।। ५० ।।

वितर्कयते, त्वम् सुर-नायकोऽसि ।
सं-याचकोऽसीति च मानवाग्रे ।।
स्वर्गम् समस्तं सततं दरिद्रम् ।
सु-याचते वै वसुधां नताऽस्यम् ।। ५१ ।।

स्पष्टं न चैतन्नु कथं ब्रवीसि ।
यदर्जुनायैव च मत्सुताय ।।
याचे भवन्तं खलु जीव-भिक्षाम् ।
प्रसार्य वस्त्रं प्रणमन् कराभ्याम् ।। ५२ ।।

अनन्तमाया-रचना-प्रगल्भ ! ।
स्वार्थान्ध ! विभ्रष्ट सहस्तनेत्र ! ।।
स्वर्गान्निरस्ती क्रियतां मया वा ।
वियुज्यतां प्राण-ततेर्भवान् वा ? ।। ५३ ।।

आखण्डलं त्वामिह खण्डयेयम् ।
यद्वा धरायामिह दण्डयेयम् ।।
कोदण्ड- दण्डोग्र गुणेन यद्वा ।
शिरस् त्वदीयं खलु ताण्डवेयम् ।। ५४ ।।

प्राणान् सुतस्यैव च रक्षितुं त्वम् ।
समागतः प्राप्नुहि, मृत्यु-दण्डम् ।।
विसृज्य रूपं कृतकञ्च भिक्षोः ।
युद्धाय युज्यस्व तथा सुरेन्द्र ! ।। ५५ ।।

पार्थम् चिकीर्षोर्जयिनं किलात्र ।
उपाय एकोऽस्ति तथा तवाऽग्रे ।।
"कर्णस्य" मूर्तिं विरचय्य युद्धे ।
ते पाण्डवास्तत्र जयं लभेयुः ।। ५६ ।।

ब्रह्माण्ड-भाग्यानि च संविधातुम् ।
चिरं नियुक्तस्य जगद् विधातुः ।।
सर्वाणि कार्याणि न शोभनानि ।
तदीय-हीनत्व विधायकानि ।। ५७ ।।

कलानिधौ सः कृतवान् कलङ्कम् ।
क्षारञ्च चक्रे सलिलं पयोधेः ।।
सुवर्णमप्यस्ति सुगन्ध-हीनम् ।
वन्हावपि धूम महाप्रचारः ।। ५८ ।।

सर्पेष्वसौ सच्छयनं मुरारेः ।
शशाङ्कमौलिं कृतवांश्च नग्नम् ।।
लक्ष्म्याश्च चाञ्चल्य-समुत्थ निन्दाम् ।
दरिद्रताञ्चाऽपि महाकवीनाम् ।। ५९ ।।

सर्प प्रसङ्कम् खलु चन्दनानाम् ।
सोपान-शून्यं गगनं चकार ।।
दुर्भाग्य दोषं खलु सज्जनानाम् ।
दुरात्मनां पश्यतु भाग्यवत्त्वम् ।। ६० ।।

फलैर्विहीनानपि कल्पवृक्षान् ।
स काम धेनूश्च पशूंश्चकार ।।
ग्रायुष्य-हीनान् भुवनेषु साधून् ।
खलान् विधत्ते च शतायुषः सः ।। ६१ ।।

विज्ञापनीयश्च निरङ्कुशः सः ।
सन्दिग्धजातिः शपितोऽप्यनेकैः ।।
मात्रा विमुक्तोऽपि पितुः प्रभावात् ।
सर्वोच्चतां धारयते तवाऽग्रे ।। ६२ ।।

दुर्भाग्य-रेखाः लिखिताः त्वया याः ।
विमार्जितास्ताः दृढ-पौरुषेण ।।
त्वया प्रदत्तं कवचादि भाग्यम् ।
दानीकृतं मादृश-भिक्षुकेभ्यः ।। ६३ ।।

कर्णः सदा पौरुषमेकमेव ।
सद्भाग्य रूपेण च मन्यतेऽयम् ।।
कोदण्डमेकं तनुते विपत्तौ ।
वर-प्रदातारमनेकवारम् ।। ६४ ।।

स-कुण्डलं तत्कवचं सुवर्णाभम् ।
सद्यः कृपाणेन मुदा निरस्य ।।
दत्तञ्च शक्राय सुराऽधमाय ।
विनाऽपि दैवं बलमुच्चकाशे ।। ६५ ।।

एतावदुक्त्वा विहसन् महात्मा ।
जगाद शक्रं पुनरुच्यतां सः ॥
जयस्य भिक्षां खलु पाण्डवेभ्यः ।
"कर्णात्" समादाय, समागतोऽस्मि ॥ ६६ ॥

सद्योऽमराणाम् सुकरैर्विमुक्ता ।
पपात कर्णोपरि पुष्प-वृष्टिः ॥
बभ्राज पूर्वादधिकं मनोज्ञम् ।
अभेद्य चर्माऽस्य महच्छरीरम् ॥ ६७ ॥

दानं गृहीत्वा स च दानपात्री ।
कृष्णाऽऽननः शीघ्रतरं बभूव ॥
कर द्वयी चास्य भृशं चकम्पे ।
वाणी किलास्याऽपि च खण्डिताऽभूत् ॥ ६८ ॥

सः प्राञ्जलिः प्राकृतवत् कथञ्चित् ।
उवाच कापट्य-कलाप्रवीणः ॥
"कर्णम्" सुवर्णाऽग्नि सम.न वर्णम् ।
प्रोल्लासित स्वर्ग-महा 'कु'-वर्णम् ॥ ६९ ॥

जयत्वजस्रं जगदेक दाता ।
त्राता भवान् वै जगतां किलाऽस्ति ॥
त्वयाऽधरेयम् गमिता महत्वम् ।
स्वर्गादपि प्रोच्चपदं त्रिकाले ॥ ७० ॥

लज्जा महासागर-सन्निमग्नः ।
कथं गमिष्यामि गृहं स्वकीयम् ॥
कापट्य-नाट्यम्, परितोऽभिनीतम् ।
मया निजात्मा परिवञ्चितश्च ॥ ७१ ॥

सुवन्दनीया समुदारता ते ।
विकम्पतेऽद्याऽपि सुरत्वमेतत् ।।
त्वदीय तेजः प्रसृतान् मयूखान् ।
वीक्ष्याऽपि राजन्नमरो मृतोऽहम् ।। ७२ ।।

किमप्यवश्यम् वरदानमस्मात् ।
ग्रहाण मत्तो विजय-प्रदन्ते ।।
कीर्तिश्चकास्तां तव चन्द्रिकेव ।
कल्पान्तमास्तां स्मरणं त्वदीयम् ।। ७३ ।।

श्रुत्वैव मुक्ति सरसां सुरस्य ।
सन् मानवोऽयं विहसन् जगाद ।।
परोपकार-व्रत "दान-वीराः" ।
न याचकाः व्यर्थवरे भवन्ति ।। ७४ ।।

शापाः अनेके विपुलाः वराश्च ।
न नाशयन्ति न च तारयन्ति ।।
महा-मनुष्याः स्व-भुजैर्बलेन ।
समादधन्ति प्रबलाः समस्याः ।। ७५ ।।

धर्मो मदीयश्च परोपकारः ।
कर्तव्य-निष्ठा किल 'काल-पृष्ठम्" ।।
सत्य-प्रियत्वम् धन-नित्य दानम् ।
युद्धं ममैतद् वरदानमस्ति ।। ७६ ।।

तद् याहि भिक्षो ! तनयाय देहि ।
मद्दत्त भिक्षोद्भव-"जीवदानम्" ।।
"कृष्णेन" यत्नैरभिरक्षितोऽपि ।
यास्यत्यवश्यम् परिहाय सर्वम् ।। ७७ ।।

इति ब्रुवन्तं तपनस्य सूनुम् ।
स्वर्गस्य भिक्षुः पुनरप्युवाच ॥
आदाय शक्तिं जयिनीममोघाम् ।
एकस्य शत्रोः किल नाशयित्रीम् ॥ ७८ ॥

"कालान्तिकाम्", पुत्र ! मुदा ग्रहाण ।
शक्तिं वरां संकट-सम्प्रयोज्याम् ॥
विनाश्य चैकं भुवनैक वीरम् ।
त्वदाज्ञयामामुपयास्यतीति ॥ ७९ ॥

प्रदाय कालान्तकरं महेषुम् ।
जयेति शब्दं सुतरां ब्रुवाणः ॥
नरेषु देवेषु च दानवेषु ।
सर्वोच्चमेनं कलयाञ्चकार ॥ ८० ॥

प्रसाद्य चैनं सुरनायकोऽसौ ।
स्वर्गम् ययौ नम्र मुख स्तदानीम् ॥
दान-प्रवीरोऽपि हसन्नमोघाम् ।
शक्तिम् समादाय समुज्जगाम ॥ ८१ ॥

इत्थं सत्कवचे सुकुण्डल-युते प्रत्तेऽपि तद्भिक्षवे ।
साऽपूर्वैव रमा चमत्कृति-युता देहेऽलसत्पूर्ववत् ॥
लब्धेष्वप्यमरैर्मनोरथ शतेष्विच्छाऽनुसारं महान् ।
राजत्येव दिवा-निशं प्र-फलितः सन् पारिजातः श्रिया ॥ ८२ ॥

॥ इन्द्रभिक्षुर्नाम सप्तदश सर्गः समाप्तः ॥

---

॥ श्रीः ॥

# मातृ-वात्सल्यन्नामाष्टादशः सर्गः

कतिपयानि दिनानि शनैः शनैः ।
निरगमन् सुतरां गज साह्वये ॥
व्यरचयन् प्रबलां रण-योजनाम् ।
समर-दीक्षित कौरव-पाण्डवाः ॥ १ ॥

निज विपक्षि नृप-क्षपण-क्षमाः ।
निरयणायि, रणाय "कुरोः क्षमा" ॥
न समधाय्यपि कैर्मनसि क्षमा ।
समभवन् किल योधन-सक्षमाः ॥ २ ॥

नभसि सत्पथ मत्यचरन् ग्रहाः ।
भुवि भवेयुरिमे शुभदाः कथम् ॥
वियति पुच्छलकेतु रदृश्यत ।
कथमियाद् रण-केतुरदृश्यताम् ॥ ३ ॥

अथ च जग्मुरिमे समराङ्गणे ।
दृढ धनुः शर-चाप गदाङ्कुशैः ॥
विलसिताः कवचाञ्चल-चञ्चलाः ।
प्रतिभटाश्च भटाः अपि सर्वतः ॥ ४ ॥

बहु पदाति रथाऽश्व गजाऽऽकुला ।
अतुल साधनता धन-संकुला ॥
किल ययौ प्रलयाय भुवस्तले ।
क्षितिभृतां निभृता चतुरङ्गिणी ॥ ५ ॥

अथ तदैक दिने निभृतं वसुः ।
नियत सान्ध्यविधिं समुपासितुम् ।।
नियमवान् गतवान् दिवस-क्षये ।
स खलु गाङ्गतटं शुभमेकलः ।। ६ ।।

भुवन भास्वर भास्कर मण्डलम् ।
अभि समर्च्य च कुंकुम चन्दनैः ।।
सहि जजाप महार्थ समन्वितम् ।
सवितृ-मन्त्र-मनन्यमनाः मनाक् ।। ७ ।।

तमनुवीक्ष्य गृहाद् विदुरस्य वै ।
द्रुत-विनिर्गम नग्नपदाऽऽपदा ।।
परिवृताऽरिपदा सित केशिनी ।
न च वृथा, तदुपान्तमगात् "पृथा" ।। ८ ।।

अनुनिशम्य तदीय पदाऽऽहतिम् ।
अतिथि-दर्शन-भाषण-लालसः ।।
समनुवीक्ष्य सुविस्तृतगौरवाम् ।
द्रुतमवोच दनूदित-गो-रवाम् ।। ९ ।।

कथय काऽसि कथञ्च सरित्तटे ? ।
परिणते दिवसे कथमेकली ? ।।
किमपि वाञ्छसि चेद् वद मे द्रुतम् ।
किमुकरोभ्यशुभं तव विद्रुतम् ।। १० ।।

इति निशम्य सुतस्य वरां गिरम् ।
गलित धैर्यवती व्यथिता पृथा ।।
हृदय माशु वितापितमश्रुभिः ।
व्यगमयद् बहिराशु सुगोपितम् ।। ११ ।।

अहमिहाऽस्मि "पृथा" तव जन्मदा ।
न जननी तव सम्प्रति "राधिका" ।।
"अधिरथो"ऽपि तथा जनको न ते ।
"गगन-मञ्जु मणि"श्च पिता स्वयम् ।। १२ ।।

न खलु सूत-सुतो नृप-वंशजः ।
भृशमभिन्न कुलः किल पाण्डवैः ।।
प्रथम-पार्थं ! निबोध निजान्वयम् ।
सततमग्रज ! पाण्डव-पञ्चकात् ।। १३ ।।

अधिकृता किल दैवत-पद्धतिः ।
इतर पाण्डववत्तव जन्मनि ।।
कुसुम-कोमल-चारु-कुमारता- ।
वयसि, पुत्र ! भवज्जनिकाऽभवम् ।। १४ ।।

त्वमतएव च दुग्ध-मुखः शिशुः ।
कवच-कुण्डल-दिव्य-विभाधरः ।।
किल समाज-भयात् परिवादनात् ।
प्रथम-पीत-कुचः परिवाहितः ।। १५ ।।

यदि न विश्वसिसि प्रतिभाषणे ।
सुत, विपश्य, मदीय दुकूलकम् ।।
तव सुकोमल देह सुरक्षकम् ।
अधिरथस्य कलत्र-सुरक्षितम् ।। १६ ।।

कलुषितस्य जनस्य भयार्दिता ।
अभवमेव, ततो न विभेम्यहम् ।।
धृतपदा परिवादक-मूर्द्धनि ।
तनय-वत्सलता-प्रतिभाविता ।। १७ ।।

तव समागमने धृत-लालसा ।
धृतवती पथि पादमिमं यदा ॥
कुविधिना विधिनैव तदान्वहम् ।
परिधृता प्रबलेन कृताऽऽलसा ॥ १८ ॥

अयि ! विरम्य कुकोप मयाद् विषात् ।
सपदि पुत्र, ममाङ्कमलङ्कुरु ॥
कुरु कृपां खलु पाण्डव-पञ्चके ।
अनुजके तव दूरय वञ्चकान् ॥ १९ ॥

समर-सूत्रमिदम् स्व-करे कुरु ।
अनुज-पञ्चकमप्यभयं कुरु ॥
मुकुट-रत्न मयूख सुशोभितः ।
विजित शात्रव ! भुङ्क्ष्व वसुन्धराम् ॥ २० ॥

इदमवेहि, समेऽपि तवाऽनुजाः ।
द्रुपदजा-प्रियया सहिताः खलु ॥
प्रविलसन्त्यनु शासन-धारिणः ।
नृपतितां परिहाय निजां ध्रुवम् ॥ २१ ॥

"अचल सत्यमिदं सकलं वचः ।
न खलु वक्ति कदाऽपि "पृथा" वृथा ॥
इति च पुत्रमिदं हि निदेशयन् ।
दिनमणिः प्रययौ किल पश्चिमाम् ॥ २२ ॥

गगनमाशु विहाय करैः क्रमात् ।
समवलम्बित पश्चिम कामिनीम् ॥
अपरिणीत-पृथा-प्रथमं पतिम् ।
जनकमाशु ननाम मुदावसुः ॥ २३ ॥

तदनु मातृ-पृथा-पद पूजिताम् ।
स्व-शिरसि प्रदधे नव-मृत्तिकाम् ।।
सकल मञ्जु मनोरथ पूरणीम् ।
सुमनसा सुलभां जननोत्तरम् ।। २४ ।।

प्रकृति सज्जित मञ्च महानटी ।
विधृत-तारित नीलम शाटिका ।।
भुवि निर्नतिषया समवातरत् ।
सपदि साऽभिनयेव नभस्तलात् ।। २५ ।।

तदनु नील मणि प्रभयाऽन्वितः ।
प्रणयिनी-प्रकृतेश्चषको महान् ।।
प्रति निलम्बित अप्यतुलो बभौ ।
प्रमद-सोम विहीन, इलोपरि ।। २६ ।।

अथ च सोऽप्यवदन्निज मातरम् ।
प्रणति-पूर्व मिमां तनयो वसुः ।।
सकल सत्यमिदम् त्वकयोदितम् ।
श्रुततरं मकयाऽपि दिवाकरात् ।। २७ ।।

अयि ! किमस्ति च कार्यमनेन ते ।
प्रथित सूत-सुतेन धरोपरि ।।
त्वमसि वै कुरु-वंश-वसुन्धरा- ।
नृप-कुले महिताऽर्जुन वीरसूः ।। २८ ।।

पयसि मादृश पुत्र विमोचिनी ।
वहसि निर्दय वज्र हृदं कथम् ।।
अभिनवोदित बालक भक्षिणी ।
ननु मता खलु कालभुजङ्गिका ।। २९ ।।

यदि भवेत्सदृशी जननी त्वया ।
न खलु मातृ-पदं परिभाष्यताम् ।।
कथय शब्द-विदामनुशासने ।
व्रजति तुच्छपदां किमु भाष्यताम् ? ।। ३० ।।

विविध योनि-गरोषु परिभ्रमन् ।
भजति मानवतां किल जीवकः ।।
स च नदी-सलिले यदि वाह्यते ।
अतुल कष्टमहो ! खलु जन्मिनः ।। ३१ ।।

मम मुखं त्वकया नहि चुम्बितम् ।
न च कदाऽपि कृतश्च निजाङ्कगः ।।
न खलु पायित माः, प्रथमं पयः ।
गतमनेन विनैव भवद् वयः ।। ३२ ।।

कृतवती मम मारण-योजनाम् ।
त्वमसि जीवनदेति कथं ? भण ।।
वद च कञ्चन-सौध-विहारिणि ।
कृश-कुटीरवता तनयेन किम् ।। ३३ ।।

अ-सुकरा तुलना तव राधया ।
सुख-वितान निर्वतित बाधया ।।
क्व खलु देव नदी सुर-वन्दिता ।
बहुल पङ्क युता क्व च निम्नगा ।। ३४ ।।

क्व नितरां सरसा सुर भारती ।
क्व खलु दूषित-पामर-भाषिका ।।
क्वच शरद् प्रणया नव चन्द्रिका ।
क्व नयनान्तकरी तमसश् छटा ।। ३५ ।।

क्व च विभारत भारत संस्कृतिः ।
क्व पर देशिक दर्शित-नग्नता ॥
तुलितयोर्युवयोर्महदन्तरम् ।
अयि ! विचारय धन्यतमे ! मनाक् ॥ ३६ ॥

क्व खलु मानस हन्स विलासिनी ।
क्व च वकी बहु धूर्ततयाऽन्विता ॥
क्व च मृगेन्द्र-वधू रति निर्भया ।
क्व च समाज-विभीति-युता मृगी ॥ ३७ ॥

मयि निज स्तन दुग्ध-निषिञ्चनीम् ।
विपुल लालन-पालन-दायिनीम् ॥
सुपरिहाय च तां जननीं निजाम् ।
नव-पदे भवतीं नु कथं भजे ॥ ३८ ॥

इति समुद्धत सत्यमनुद्धतम् ।
परि निशम्य "पृथा" पृथुलं वचः ॥
पुनरवोचदतीव विलज्जिता ।
सकल दोष-निवारण-सज्जिता ॥ ३६ ॥

यदवदः प्रिय पुत्र ! तथैव तत् ।
भवति किन्तु सदा जननी मनः ॥
अति पवित्रमनन्तमुदाऽऽवहम् ।
अपि समाप्तनयं तनयम्प्रति ॥ ४० ॥

नृप कुमार परीक्षण-दुर्दिने ।
तव च सूत-कुले जनि-संयुतम् ॥
कलकलञ्च निशम्य "कृपो"त्थितम् ।
परिसमाप्त बला, किल मूर्च्छिता ॥ ४१ ॥

तव विवाह दिनेषु वधूं नवाम् ।
सुमनसा परिधाययितुं नवम् ।।
सहितमुन्नत रत्न विभूषणैः ।
प्रहितमन्तरितं वसनं मया ।। ४२ ।।

अपि मया नृप-सूय-महोत्सवे ।
सुत ! निरीक्ष्य तवोल्लसितं मुखम् ।।
कवच-कुण्डल चारु चमत्कृतम् ।
तव समादरणं परियोजितम् ।। ४३ ।।

बल पराजित भूतल-भूभृति ।
प्रति निर्वर्तिनि, दिग्विजयात्त्वपि ।।
मम वशा, विदुराऽऽश्रम कन्यका ।
कृतवती तिलकं तव मस्तके ।। ४४ ।।

तव सुतस्य महाजननोत्सवे ।
बहु सुवर्ण सुरत्न परिष्कृतम् ।।
सकल भूषण जातमनन्यया ।
तव समक्ष मतश्च समर्पितम् ।। ४५ ।।

सकल मातृ-गणोपरि "राधिका" ।
मम सदैव सुपूज्य तमा खलु ।।
अति दयालुतया च स्नुत स्तनी ।
अभवदुच्च मनास्तव पालने ।। ४६ ।।

भव, निजाऽनुज-मण्डल-मण्डनः ।
त्यज दुरोदर सादर-संगतिम् ।।
समुचितं कदनं न निजाऽनुजे ।
कुरु च षट् तनयां हि पुनः "पृथाम्" ।। ४७ ।।

न च मया रचिता कटु-योजना ।
न च नरेन्द्र-नयो रचितः क्वचित् ।।
तव कदाऽप्य शुभं परिचिन्तितम् ।
न च तनूज ! यशो न कलङ्कितम् ।। ४८ ।।

सपदि मत्स्तन जन्य पयः पिबन् ।
निज-मुखेन, ममाङ्कमुदञ्चय ।।
इदमचञ्चल मञ्चल मास्तृत ।
मनुज-जीवन-दान-दयां कुरु ।। ४९ ।।

इति निबोधन माकलयन् मुहुः ।
"वसु" रयं निजगाद च मातरम् ।।
जननि लेहि च "कर्ण"-चतुष्टयम् ।
न खलु देय मिदं तनय-द्वयम् ।। ५० ।।

इति निशम्य सुगूढ तमं तया ।
पुनरपि प्रतिगामुपचक्रमे ।।
उपगता सुखमेक-सुतार्थिनी ।
भ्रमितया गमितञ्च सुत-द्वयम् ।। ५१ ।।

पुनरुवाच तथैवमिमां "वसुः" ।
सपदि षट् चतुरान्तरमुत्सृज ।।
मयि हतेऽप्यथवाऽपि तवाऽर्जुने ।
भवसि पञ्चसुता जननि ! ध्रुवम् ।। ५२ ।।

"मुर-रिपुः" खलु यस्य सुरक्षकः ।
भवति तस्य कदा च कुतो भयम् ।।
स, शरणाऽऽगत पार्थमपि त्यजेत् ।
न हि "वसु"श्च सुयोधनमुत्सृजेत् ।। ५३ ।।

अयि ! तथाऽर्जुन-वर्जित-पाण्डवाः ।
प्रपतिताः अपि मार्गण-संमुखम् ॥
न च तदुत्तम-जीव-हरं मम ।
खलु भविष्यति सज्यमिदम् धनुः ॥ ५४ ॥

अकथनीय-विचार-परायणे !
रणमिदम् खलु यात्यनिवार्यताम् ॥
जय-पराजय चिन्तनमप्यतो ।
स्व-हृदयादपि चाऽऽशु निवार्यताम् ॥ ५५ ॥

विधि-करैः सकलस्य जनस्य वै ।
शिरसि यल्लिखितं निखिलञ्च तत् ॥
मरण-जीवन-रोग-जयाऽजयम् ।
नियमतः समये खलु जापते ॥ ५६ ॥

तव सुताः यदि षट् परिवर्तितुम् ।
बलभृतो ह्यवनीं कृत-निश्चयाः ॥
त्वमसि "वीर-सवा" नृपवंशजा ।
पुनरिमां धरसे नु कथं शुचम् ॥ ५७ ॥

विजयिनोऽजयिनश्च नृपाः खलु ।
जननि ! यान्ति सदा यम-मन्दिरम् ॥
सुयश एव सतामिह तिष्ठति ।
रण-महोत्सव लभ्यमिदम् चिरम् ॥ ५८ ॥

इति निवेद्य वसुर्निज-मातरम् ।
द्रुतमनाश्च तदङ्कमुपाविशत् ॥
विशद चित्ततया तनुजं "पृथा" ।
स्तन युगाग्रममुं समपाययत् ॥ ५९ ॥

चरण युग्म मयं नत-मस्तकः ।
प्रणतवान् पितरञ्च हृदा स्मरन् ।।
परिचुचुम्ब "पृथा"ऽपि सु-तोषिता ।
"प्रथम-पुत्र"-शिरश्च यशोऽङ्कितम् ।। ६० ।।

सपदि परिजगाम स्वान्तरं साऽपि कुन्ती ।
प्रथमतम-कुमारोऽप्यायर्यौ सस्तदीयः ।।
निज-निज-परिचिन्ता-व्याप्तयोरेव चैवम् ।
मनिमिष-नयनान्ता सा निशाऽपि व्यतीता ।। ६१ ।।

।। कर्ण-मातृवात्सल्यन्नामाष्टादशः सर्गः समाप्तः ।।



।। श्री ।।

# वैक्रान्तिकन्नामैकोनर्विंशः सर्गः

अथः "कुरु-क्षेत्र" पवित्र नाम्नि ।
रणाऽङ्गणे कौरव-पाण्डवास्ते ।।
बभूवुरेकत्र जयाऽभिलाषाः ।
परस्परं, सर्व-नृपाऽनुयाताः ।। १ ।।

रणस्य नीताऽववधारितायाम् ।
भीष्मेण पक्षद्वय मानितेन ।।
अष्टादशाहः परिचाल्यमानम् ।
युद्धाऽभिधानम् यजनं निबद्धम् ।। २ ।।

तदर्थमेका समितिः सुबद्धा ।
गाङ्गेय वाचा हि सुयोधनेन ।।
स्व पक्ष-विख्यात धनुर्धरेषु ।
सेनापतीनां चयनं प्रकृत्य ।। ३ ।।

सुवर्ण-शैल-प्रतिमानमुच्चैः ।
कर्णम् स्वकीयाऽनुभवं प्रवक्तु-।।
मप्रार्थयत्सर्व महारथाना- ।
मग्रेसरं प्रागधिपः कुरूणाम् ।। ४ ।।

तदीय वाचं सुतरां निशम्य ।
कृताऽकृतं सर्वमवेक्षमाणः ।।
विरोध-पक्षं च समीक्षमाणः ।
ददौ स सीमान्त-विनिर्णयं सः ।। ५ ।।

निशम्यतां कौरव-राज ! शान्त्या ।
यदुच्यते तन्मनसा समग्रम् ।।
जय प्रदं क्षिप्रमनन्य वाच्यम् ।
महारणेऽस्मिन् रण-नीति-युक्तम् ।। ६ ।।

कृष्णेन यत्सारथिता गृहीता ।
तथाऽऽञ्जनेयोऽस्ति च यस्य केतौ ।।
आभ्यामुभाभ्यां परिरक्षितोऽपि ।
जप्यो यथा स्यात्स धनञ्जयोऽत्र ।। ७ ।।

क्षेत्रेऽपि धर्मस्य महानधर्मः ।
शक्यः प्रयोक्तुं नितरां द्विषद्भिः ।।
ज्ञातैव तेषां भवता प्रतिज्ञा ।
तत्साऽवधानेन च वर्तितव्यम् ।। ८ ।।

अष्टादशाहःसु, महारणस्य ।
भीष्मादि-बद्धा परियोजनेयम् ।।
एकेन साध्या दिवसेन मित्र ! ।
भविष्यतीदम् वचनं शृणुष्व ।। ९ ।।

त्वं सर्वतः प्रागभिषेच्नयस्व ।
सेनापतित्वे द्विषदन्तकं माम् ।।
आग्नेय बाणैः परिशोषयामि ।
स-पाण्डवं शत्रु-महोदधिं ते ।। १० ।।

रणाङ्गणे चारु तवाऽभिषेकम् ।
सद्यः करिष्यामि विधान-पूर्वम् ।।
सिंहासने प्रोच्चतमे कुरूणाम् ।
निष्कण्टकं सर्वनृपैर्नमस्यम् ।। ११ ।।

निशम्य वैकर्तन-वाक्यमेतत् ।
जानन्नपीमं प्रलयङ्करेषुम् ।।
स्ववीरतायाः अवकाशमाप्तुम् ।
समुत्थितोऽयम् प्रतिवादि-भीष्मः ।। १२ ।।

उवाच "राजन् ! वसुना यदुक्तम् ।
सत्यञ्च तत् किन्तु कुले वरिष्ठः ।।
महारथी सर्व धनुर्धराणा ।
महं तथैवार्द्धरथी किलायम् ।। १३ ।।

द्रोणस्तथा सर्वं गुरुर्जगाद ।
भीष्मोत्तरं वीर ! मम क्रमोऽस्ति ।।
सेनापति त्वाय गुरुत्व-भाजः ।
मानं समेषामपि रक्षणीयम् ।। १४ ।।

सुयोधने मौन मुखेऽप्युवाच ।
"कर्णः" कटाक्षेप-विभिन्नवर्णः ।।
"न स्वीचकार प्रवरोऽपि भीष्मः ।
सर्वाऽतिगं मेऽत्र महारथित्वम् ।। १५ ।।

अतश्च यावन्न पतिष्यति प्राक् ।
अयं रणे पार्थ शरै र्विभिन्नः ।।
भीष्मश्च तावन्न धरिष्यति स्वम् ।
करं "वसुः" स्फूर्जित-"काल पृष्ठे" ।। १६ ।।

सेनापतित्वम् समलंकरोतु ।
भीष्मश्च सर्व-प्रथमं वरिष्ठः ।।
द्रोणस्तथा सर्वगुरुस्ततश्च ।
वि-पाण्डवां सर्वधरां करोतु ।। १७ ।।

श्रुत्वैतदुच्चावच वाक्य जालम् ।
सर्वेऽपि योधाः शिविराणि जग्मुः ॥
दैवेच्छया वा भवति प्रकृष्टम् ।
निकृष्टमेतन्न विचारणीयम् ॥ १८ ॥

कर्ण-प्रतिज्ञातमिदं विदित्वा ।
तदन्तिकं प्राप मधुं द्विषन् सः ॥
प्रेम्णा तथोवाच धरैकवीरम् ।
वसूपमानञ्च वसुम् प्रसन्नः ॥ १९ ॥

धर्मज्ञ ! धर्मोद्धरणे स-यत्नम् ।
क्षेत्रे च धर्मस्य धृतोरु धर्मम् ॥
धर्माऽऽत्मकं विश्रुत दान धर्मम् ।
धर्मैषिणं त्वामभिनन्दयामि ॥ २० ॥

"दिवंगते चैव पितामहेऽस्मिन् ।
धनुर्धरिष्ये" इति यत्त्वयोक्तम् ॥
तद्धन्य वादार्हमति प्रशस्तम् ।
तपत्प्रतापेषु महारथेषु ॥ २१ ॥

तत्पाण्डवानेवमनुग्रहाण ।
भीष्मान्तमीक्षन् समराङ्गणेषु ॥
करोतु कोदण्डमिदम् वरं ते ।
प्रताण्डवं कौरव-खण्डनाय ॥ २२ ॥

युद्धोत्सवं केवलमग्रधर्मः ।
भवादृशां वीरवराग्रणीनाम् ॥
धर्माऽनपेतं तदिदं यदि स्यात् ।
निजं परं संगणनं च न स्यात् ॥ २३ ॥

किम् कारणम् ? तेन पिता महेन ।
सेनापतित्वे न कृता नियुक्तिः ।।
युद्धस्य चैवाऽऽदि-दिनेऽत्यभीष्टा ।
दिशां विजेताऽर्द्धरथी कथं वा ? ।। २४ ।।

सेनापतित्वं प्रथमं ग्रहाण ।
महारथिन् ! संमिल, पाण्डवेषु ।।
दिनेन चैकेन समापनीयम् ।
दौर्जन्यभू-जन्यमधन्यमेतत् ।। २५ ।।

ये चाऽपि दुष्टाः नृपतां वहन्ति ।
अधार्मिकाः भूतल मर्दयन्ति ।।
समापयन्, तानखिलानिदानीम् ।
सम्पूर्ण-युद्धे विजयं लभस्व ।। २६ ।।

समाप्त वाणौ मधु-सूदनेऽस्मिन् ।
"कर्णः" कराभ्यां च नमश्चकार ।।
यदीदृशी स्यात्खलु केशवेच्छा ।
कस्याऽपि न स्यात् खलु केशवेच्छा ।। २७ ।।

युद्धे करिष्यामि च दर्शनं ते ।
संमानयिष्यामि निदर्शनं वा ।।
अवार्यतायां भवितव्यतायाः ।
वैमत्य-हीनाः सुधियो भवन्ति ।। २८ ।।

अतो महाभारत युद्धनाट्यम् ।
अलं, धरामञ्चमलङ्करोतु ।।
सर्वैरिदम् पाण्डव-कौरवीयैः ।
वीराग्र-गण्यैरभिनेयमेव ।। २९ ।।

अन्योऽन्यमित्थम् किल संल्लपन्तौ ।
समुल्लसन्तौ कृत-मन्द हासौ ॥
सं जग्मतुः स्वं शिविरं मनोज्ञम् ।
अनेक शस्त्राऽस्त-बुधैः प्रवीरैः ॥ ३० ॥

सेनापतित्वे च पितामहस्य ।
रणं प्रवृत्तं प्रथमं करालम् ॥
अक्षौहिणीताः खलु पाण्डवीयाः ।
जग्मुः प्रशस्ताश्च यमस्य लोकम् ॥ ३१ ॥

शिखण्डिनं प्रेष्य पुरस्तदानीम् ।
ते पाण्डवास्त्यक्त शरासरं तम् ॥
शरैर्विभिन्नाङ्गममुं सुतीक्ष्णैः ।
निपातयामासुरपेतधर्माः ॥ ३२ ॥

एवञ्च सर्वस्य पितामहोऽपि ।
"देवव्रतो" नाम यथार्थ-भीष्मः ॥
स्वच्छन्द मृत्युः शर-शायिकाया- ।
मखण्ड वीर्योऽपि पपात सायम् ॥ ३३ ॥

लयं दधाने दशमे दिनेऽस्मिन् ।
पक्ष-द्वयी साऽश्रु मुखी शुशोच ॥
समाप्त-पुण्यः पतितः किमेषः ।
कश्चित्सुरः प्रोच्चतमात् ख-मध्यात् ॥ ३४ ॥

किमागतं सानु हिमालयस्य ।
यद्वा पथोभ्रष्ट अयं विवस्वान् ॥
न कौरवाः दुःखमवाप्नुवन् ते ।
किन्त्वर्जुनाद्याः रुरुदुः प्रकामम् ॥ ३५ ॥

अथाऽपरस्मिन् महति प्रभाते ।
आकाश-देशेऽप्यपरं धरायाम् ।।
तेजो नवीनम् बबृधे ह्यकस्मात् ।
कल्पान्त-दृश्यं किरणान्त-कान्तम् ।। ३६ ।।

सः कौरवीयां पृतनां समग्राम् ।
कुर्वंश्च शीघ्रम् पुनरप्यजेयाम् ।।
द्रोणाय नेतृत्व-भरं प्रदाय ।
"कर्णो" महाकल इवोत्थितोऽभूत् ।। ३७ ।।

सु-सज्जितं जैत्र रथं शरोघैः ।
कृत्वा च सज्यं किल "काल पृष्ठम्" ।।
कैरप्यभेद्यं नितरां द्विषद्भिः ।
धृत्वा तनुत्राणमियाय भीष्मम् ।। ३८ ।।

प्रणाम-पूर्वं विशदं समूचे ।
करोमि पार्थान् भवता समानान् ।।
अवैतु मां पूज्य ! परास्त-विश्वम् ।
महारणेषु प्रलयाऽग्नि-कल्पम् ।। ३९ ।।

युधिष्ठिरं भीम मथाऽर्जुनं वा ।
तस्याऽनुजं वाऽपि तदाऽनुजं वा ।।
साक्षाद् यमं वा मधुसूदनं वा ।
शरैरमोघैः परिपातयामि ।। ४० ।।

पश्यत्वमद्यैव भुजङ्ग तुल्यान् ।
शरान् मदीयान् वमतो विषाग्निम् ।।
अत्तुं प्रवृत्ता निव पार्थ-भेखान् ।
कराल-कोदण्ड-विमण्डलाग्रात् ।। ४१ ।।

शिखण्डि-षण्डं पुरतो विधाय ।
किम् शौर्यमेषां भवतो निपाते ।।
छलेन युद्धे, विजये धृताशाः ।
मे कातराः किम् बलिनो भवन्ति ? ।। ४२ ।।

समाप्त वाचं "वसु" मीक्षमाणः ।
अदम्य तेजोऽस्य समीक्षमाणः ।।
अपि प्रवक्तुं सुतरामशक्तः ।
सः कौरवाऽग्र्यः प्रबभाण कर्णम् ।। ४३ ।।

सत्यं समग्रं यदपि त्वयोक्तम् ।
महारथानाञ्च महारथोऽसि ।।
मया त्वमुक्तोऽर्द्धरथस्तदानीम् ।
तात्पर्यमन्यत् खलु तादृशोक्तेः ।। ४४ ।।

तज् ज्ञातमेवेदमपि त्वयाऽद्य ।
बाल्याच्च वीरो बलवान् मतो मे ।।
सन्मान-पात्रं खलु सर्वथाऽसि ।
त्वमेक एवाऽसि दिशां विजेता ।। ४५ ।।

दीनेषु सत्यम् दलितेषु नूनम् ।
शश्वद् दयावान् खलु मानवोऽसि ।।
त्वम् दान-वीरोऽसि चरित्र चारुः ।
धर्म-प्रियो वीर-वरो मतो मे ।। ४६ ।।

पार्थाऽधिकः प्रोच्च-धनुर्विधर्ता ।
भर्ता समेषां प्रलयस्य कर्ता ।।
यथाऽर्जुनं रक्षति केशवोऽत्र ।
तथैव पास्येव सुयोधनं त्वम् ।। ४७ ।।

सर्वं किलैतच्च परं तथाऽपि ।
मदन्तमेवाऽस्तु रणं विगर्ह्यम् ।।
आरब्ध मत्युग्रतराऽनुतापम् ।
त्यजन्ति सन्तः सहसैव कार्यम् ।। ४८ ।।

न केवलं शाश्वत वीरतायाः ।
प्रतीकमेकं धनुरेव चाऽस्ति ।।
श्रमादिभिर्देश-विकास-कार्ये ।
भवन्ति वीराः खलु दत्तचित्ताः ।। ४९ ।।

त्वदीय-वाक्यञ्च सुयोधनोऽसौ ।
सद्वेद वाक्येन समं शृणोति ।।
श्रद्धाञ्च धत्ते गुरुवत् तवाऽग्रे ।
तदङ्गराज ! प्रभव प्रशान्तः ।। ५० ।।

अनेन कार्येण तवाऽपि कीर्तिः ।
पुनः पवित्रा स्पृशताद् दिगन्तम् ।।
स्वर्गञ्च गच्छानि सुखं तथाहम् ।
पार्थैः समन्वेतु सुयोधनश्च ।। ५१ ।।

वंशाङ्कुराश्चैव पुनश्चलन्तु ।
सत्क्षत्रियाणां हि सुखम् पृथिव्याम् ।।
सर्वत्र शान्तेः सुषमा तथाऽस्तु ।
विच्छेद-हीनो भरतस्य वंशः ।। ५२ ।।

अद्याऽस्मदीयं जलयानमेतन् ।
महाऽर्णवाङ्के पतितं किलाऽस्ति ।।
कथं नवीनः खलु निश्चयः स्यात् ।
सन्धिर्न च स्यात्समरे प्रवृत्ते ।। ५३ ।।

निशम्य चेदम् पुन रप्युवाच ।
युद्धस्य "कर्णः" किल कर्णधारः ॥
सत्यं नर-व्याघ्र ! निदेशनन्ते ।
भवन्निपातात्प्रथमं यदि स्यात् ॥ ५४ ॥

अहम् करिष्ये प्रलयं पृथिव्याम् ।
पश्यन्तु सर्वे मम कौतुकानि ॥
मदीय-लक्ष्यं जय एव नान्यत् ।
यद्वा शिरश्छेद अथाऽर्जुनस्य ॥ ५५ ॥

उवाच भीष्मः समरैक वीरः ।
धन्योऽसि, धन्योऽसि धरैकवीर ! ॥
इच्छाऽस्तु पूर्णा सततं त्वदीया ।
पुनः पृथिव्यां विजयस्तवाऽस्तु ॥ ५६ ॥

पादौ तदीयौ प्रणमन् सहर्षम् ।
ननाम सूर्यम् पितरं स्वकीयम् ॥
प्रचण्ड-कोदण्डमखण्ड घोषम् ।
टंकारयामास च ताण्डवाय ॥ ५७ ॥

गर्जन्तमेनं घन-घोरमुच्चैः ।
सम्प्रस्थितं तत्र महारणाय ॥
कालं द्विषां "जैत्र" रथाऽधिरूढम् ।
पुनर्नवं जीवनमाप सैन्यम् ॥ ५८ ॥

अक्षौहिणी साऽपि च कौरवाणाम् ।
सञ्चालिता द्रोण गुरोर्निदेशे ॥
उच्चारयामास सह स्वरेण ।
"जयोऽस्तु कर्णस्य" महामुदेति ॥ ५९ ॥

नवः प्रकाशः कुरु-राज सैन्ये ।
प्रोत्साहकः सञ्चरितो बभूव ॥
विस्मृत्य भीष्मस्य रणाऽवपातम् ।
समस्त-योधास्तदनु प्रतस्थुः ॥ ६० ॥

अक्षौहिणीनाञ्च महा-समुद्रे ।
जयाऽभिलाषस्य तरङ्ग-भङ्गाः ॥
उत्तुङ्गतां बभ्रुरनल्प-कल्पाः ।
कल्पान्त-कालाऽभिनये प्रवृत्ताः ॥ ६१ ॥

उल्लास-लास्यम खलु सैनिकानाम् ।
स्वच्छन्दतां प्रौढतमां जगाम ॥
सैन्योदधिश्चाऽपि तदाऽङ्गराज- ।
जय-प्रघोषैर्नितरां जगर्ज ॥ ६२ ॥

इति तरणि-तनूजः संयुते श्वेत वाहैः ।
लसित-विजय-केतौ स्यन्दने चाधिरुह्य ॥
असुर-सुर-मनुष्यैरप्रधृष्यो नितान्तम् ।
ग्रसितुमभिययौ सः पाण्डवानीकमुग्रम् ॥ ६३ ॥

॥ कर्ण-वैक्रान्तिकन्नामैकोनविंश-सर्गः समाप्तः ॥

---

।। श्रीः ।।

# पाण्डव-पराजयोनामविंशतितमः सर्गः

भीष्मे निपतिते तत्र ।
व्यग्रचित्तः सुयोधनः ।।
पराजय-परिक्लान्तः ।
आचार्योपान्तमाययौ ।। १ ।।

उच्चावचैश्च वचनैः ।
द्रोणाचार्यमधिक्षिपन् ।।
भृशमुद्वेजयामास ।
पुरस्तादेव धन्विनाम् ।। २ ।।

तमाचार्योऽब्रवीत् क्षिप्रम् ।
सान्त्वयन् चिन्तयाऽन्वितम् ।।
जयाऽजयौच सर्वेषाम् ।
युद्धे न निश्चिताविति ।। ३ ।।

तथाऽपि प्रति जानेऽहम् ।
संग्रामेऽद्य भयङ्करे ।।
पाण्डवानां महावीरम् ।
हनिष्यामि सुनिश्चितम् ।। ४ ।।

तान् सर्वान् मज्जयिष्यामि ।
दुरन्ते शोक-सागरे ।।
अद्य राजन्नवेक्षस्व ।
व्यूह-निर्माण कौशलम् ।। ५ ।।

इत्युक्त्वा कर्णमादाय ।
"चक्र-व्यूह" मरारचत् ।।
द्वारे संस्थाप्य चैतस्य ।
सिन्धु-राजं "जयद्रथम्" ।। ६ ।।

केन्द्रे महारथान् सर्वान् ।
दुर्योधन पुरः सरान् ।।
तत्रैतेषाञ्च रक्षार्थं ।
"मङ्गराजं"न्ययोजयत् ।। ७ ।।

व्यूहभेदन विद्यायाम् ।
निपुणे केवलाऽर्जुने ।।
"संसप्तकान्" पराजेतुम् ।
दूरं याते च पाण्डवाः ।। ८ ।।

प्रेषयामासु रक्षोभ्य ।
"मभिमन्युं" महारथम् ।।
सौभद्रं षोडषाऽब्दञ्च ।
व्यूह-भेदन-सक्षमम् ।। ९ ।।

अज्ञात-निर्गमम् व्यूहा- ।
च्चक्राख्यात्तद् दुराग्रहात् ।।
जानन्तोप्यस्य सततम् ।
पार्थभिन्नैरभेद्यताम् ।। १० ।।

स्यन्दनं चाधिरुह्याऽसौ ।
प्रेम्णा सन्तोष्य चोत्तराम् ।।
भीमाद्यनुगतः क्षिप्रम् ।
व्यूह-द्वारमुपाययौ ।। ११ ।।

द्वारदेशे स्थितं शूरं ।
सैन्धवं प्रागमूर्च्छयत् ।।
एकाक्येव विवेशाऽसौ ।
सैन्धवाऽपास्त सैनिकः ।। १२ ।।

भिन्दन् तञ्च महाव्यूहम् ।
पातयन् वीर सैनिकान् ।।
व्यूह केन्द्रे ददर्शाऽसौ ।
सप्तवीरान् महारथान् ।। १३ ।।

त्रोटित व्यूह सर्वस्वम् ।
विमूर्च्छित जयद्रथम् ।।
सौभद्रं प्रेक्ष्य चाचार्य- ।
प्रमुखाः पर्यवारयन् ।। १४ ।।

आकर्ण-कृष्ट नाराचैः ।
द्रोण दुःशासनादिकान् ।।
अत्यर्थम् पीडितान् कृत्वा ।
सर्वं सैन्यमशातयत् ।। १५ ।।

द्रोणादीन् विद्रुतान् वीक्ष्य ।
व्यूहञ्च त्रुटितं तथा ।।
"कर्णः" क्रोधाऽति ताम्राक्षः ।
जगर्ज रण-मूर्द्धनि ।। १६ ।।

शशाङ्कार्द्ध मुखेनाऽसौ ।
शरेणोच्चिच्छिदे धनुः ।।
सौभद्र-सिंहम् द्रागेव ।
बबन्ध शर-पञ्जरे ।। १७ ।।

सोऽप्यन्यद् धनुरादाय ।
सुभद्रा-तनयो महान् ।।
गुरणेन योजयामास ।
पुनश्च सहसाऽऽशुगैः ।। १८ ।।

प्रबृद्ध मन्युरत्यर्थं ।
मभिमन्युः प्रतापवान् ।।
शर-जालं विनिर्भेद्य ।
विव्याध च शरैर्वसुम् ।। १९ ।।

अनिर्भेद्यत्वचः श्रीमा- ।
नङ्गराजः पुनः शरैः ।।
सदश्वान् पीडयामास ।
चिच्छेदाऽस्य रथ-ध्वजम् ।। २० ।।

तच्छरान् वञ्चितुं सोऽपि ।
चक्रवत् स्यन्दनं पुनः ।।
अर्जुनिर्भ्रामयामास ।
बाधयन् सर्व-कौरवान् ।। २१ ।।

मर्दनं प्रेक्ष्य सेनायाः ।
अभिमन्योः सितैः शरैः ।।
कर्णः करण्न्ति कृष्टेषुः ।
पातनेऽस्य मनो दधे ।। २२ ।।

निर्गताः हन्स निःस्वानाः ।
कङ्क पुङ्खाः सुवर्चसः ।।
रथ्यान्निपातयन्तश्च ।
बभञ्जू रथमुत्तमम् ।। २३ ।।

पुनर्विव्याध सौभद्रो ।
"वसुसेनं" सुदुर्जयम् ।।
नाराचैर्वज्र-संकाशैः ।
सपक्षोरग-सन्निभैः ।। २४ ।।

मुमोच सूर्य-दैवत्यम् ।
वसुर्नाराचपुङ्गवम् ।।
पूर्वम् भ्रातृ-वधं स्मृत्वा ।
पार्थ द्वारा विराट् पुरे ।। २५ ।।

तेन विद्धोऽर्जुनिः क्षिप्रम् ।
निपपात महीतले ।।
मूर्च्छितस्य च मूर्द्धानम् ।
दलन् दुःशसनात्मजः ।। २६ ।।

द्यु-लोकं यापयामास ।
सिंह-विक्रान्त शक्तिकम् ।।
हाहाकारो महानासीत् ।
पाण्डवीये दले तदा ।। २७ ।।

संसप्तकान्पराजित्या- ।
गतः "श्रीकृष्ण"-सारथिः ।।
जयद्रथस्य मूर्द्धानम् ।
चिच्छेदाऽऽशु महेषुणा ।। २८ ।।

तच्छिरो व्योम-मार्गेण ।
तत्पितुरङ्कमागमत् ।।
तस्य चैवं शिरश्चाऽपि ।
पृथिव्यङ्के समापतत् ।। २९ ।।

सप्त-सप्तिस्तत श्चाऽपि ।
दीर्घाऽध्वश्रम खेदितः ।।
सिष्णासुरिव सद्व्योम्नः ।
पश्चिमाऽब्धौ समापतत् ।। ३० ।।

रात्रौ स्वे स्वे च शिविरे ।
कौरवाः पाण्डवाश्च ते ।।
श्वस्तनीं रचयाञ्चक्रू ।
रणस्य परियोजनाम् ।। ३१ ।।

निशायाञ्च व्यतीतायाम् ।
रश्मि-माली शनैः शनैः ।।
उदयाचलमारूढो ।
दिदृक्षुः पुत्रवीरताम् ।। ३२ ।।

पाञ्चालाः सोमकाश्चैव ।
सृज्जयाश्च महारथाः ।।
कौरवानीकमाक्रान्तुम् ।
मुद्ययू रण-दुर्मदाः ।। ३३ ।।

क्षुधाऽऽर्तव्याघ्र संकाशाः ।
खड्ग चक्र धनुर्धराः ।।
द्रोणं कृपं समापेतुः ।
सानुजञ्च सुयोधनम् ।। ३४ ।।

अपि क्रोधानलस्तेषां ।
द्रोणस्य शरवृष्टिभिः ।।
शशाम नैव सर्वेषाम् ।
पूर्व शात्रव-वर्द्धितः ।। ३५ ।।

कृष्ण-सारथ्य-संयुक्तः ।
पार्थो गाण्डीव-मण्डलात् ।।
निर्गतैः कुरु-सैन्यस्य ।
शरैः प्राणानपाहरत् ।। ३६ ।।

त्राहि त्राहीति निध्वानम् ।
श्रुत्वा कर्णः शिलीमुखैः ।।
जैत्र-स्यन्दनमारूढः ।
सूदयामास पाण्डवान् ।। ३७ ।।

जिह्मबाणै रजिह्माग्रैः ।
सृञ्जयाः क्षतविग्रहाः ।।
युद्ध भूमिं परित्यज्य ।
धावनं शरणं ययुः ।। ३८ ।।

सोमकान् सात्यकि-प्रख्यान् ।
पार्थ पक्षधराँस्तथा ।।
शर-जालेऽति विस्तीर्णे ।
रुरोध पतितान् पुनः ।। ३९ ।।

पीडयामास दिव्याऽस्त्रैः ।
विक्षताङ्गान् चकार सः ।।
भीमादि-रक्षितं तेषाम् ।
पद्म-व्यूहमभञ्जयत् ।। ४० ।।

पाञ्चालान् प्रहरन् बाणैः ।
पातयामास भूतले ।।
विचित्रं योधयामास ।
पञ्चालस्य रथव्रजान् ।। ४१ ।।

पूर्वाऽनुभूत सम्पाताः ।
द्विवारं तस्य संगरे ।।
विमुखाः प्राद्रवन् सर्वे ।
द्रुपदाद्याः क्षितीश्वराः ।। ४२ ।।

पाण्डवीयां चमूं सर्वाम् ।
ध्वस्तवीरां विलोकयन् ।।
पार्थमुद्बोधयन् खिन्नम् ।
समूचे पार्थ-सारथिः ।। ४३ ।।

पश्याऽर्जुन ! महावीरम् ।
"कर्णम्" सर्व भयङ्करम् ।।
समुद्रमिव गर्जन्तम् ।
उद्वेलितमिमं रणे ।। ४४ ।।

प्रलयं सञ्चिकीर्षन्तम् ।
बले दण्ड-भृता समम् ।।
"काल पृष्ठे" महाचापे ।
मृत्यु-दण्ड-निभान् शरान् ।। ४५ ।।

सन्धायाऽऽशु विमुञ्चन्तम् ।
शत्रु संहारणोद्यतम् ।।
लेलिहानं महा सेनाम् ।
महाग्निम् कुपितं यथा ।। ४६ ।।

उड्डीयन्ते तृणानीव ।
चक्रवाते समागते ।।
अक्षौहिण्यस्त्वदीयाः वै ।
कर्णस्य प्रथमाऽऽक्रमे ।। ४७ ।।

सैन्यानां दुर्दशाऽनेन ।
प्रारम्भे एव यत्कृता ।।
करिष्यतेऽग्रे क्रुद्धेन ।
न जाने सा च कीदृशी ।। ४८ ।।

व्याकुलाः रथिनोऽस्माकम् ।
"धृष्टद्युम्न"श्च "सात्यकि": ।।
न शक्नुवन्त्यपि द्रष्टुम् ।
महाकालसमं रणे ।। ४९ ।।

कदाऽप्ययं प्रवृद्धोऽग्नि ।
र्न मुञ्चति रिपून् रणे ।।
मन्यस्व चैनं युद्धेषु ।
शत्रु कालानलं ध्रुवम् ।। ५० ।।

वाडवाग्निश्च कालाग्नि ।
स्तथा प्रलय-मारुतः ।।
एते किञ्चिच्च मुञ्चन्ति ।
नाऽस्य क्रोधाऽनलो महान् ।। ५१ ।।

त्वद् भ्रातरः क्व चेदानीम् ।
गताः ? इत्यपि संशयः ।।
विलम्बो घातकश्चाऽस्ति ।
शैथिल्यञ्च भयङ्करम् ।। ५२ ।।

निशम्य चेदम् कृष्णोक्तम् ।
गाण्डीवाच्च धनञ्जयः ।।
चकार वृष्टिं वाणानाम् ।
कर्णोपरि भयाऽऽवहाम् ।। ५३ ।।

एकस्या एव पक्षिण्याः ।
स्वर्णपक्षौ मनोहरौ ॥
एकस्या एव कायायाः ।
निर्मले नेत्र तारके ॥ ५४ ॥

अभिन्नायाश्च विद्यायाः ।
सिद्धान्तौ सर्वसम्मतौ ॥
एकस्याः दीपिकायाश्च ।
वर्तिके सत्प्रकाशिके ॥ ५५ ॥

अनन्यायाः नगर्याश्च ।
सन्मार्गौ प्रापकौ नृणाम् ॥
एक भूमि समुत्पन्नौ ।
कल्पवृक्षौ फल-प्रदौ ॥ ५६ ॥

यद्यप्युभौ च कौन्तेयौ ।
लतायाः कुसुमेऽप्युभे ॥
एक वंशाऽवतन्सौ च ।
जघ्नतुस्तौ परस्परम् ॥ ५७ ॥

भीष्माऽभिपातश्चाऽधर्मा ।
दधर्मादर्जुनेर्वधः ॥
भूरिश्रवा अधर्मेण ।
विनाशं गमितो रणे ॥ ५८ ॥

परिभाषाऽपि धर्मस्य ।
रणेऽन्यैव विलोक्यते ॥
जय-प्राप्तिश्च येन स्यात् ।
स धर्मो विदुषां मतः ॥ ५९ ॥

रणं विहाय निष्क्रान्तो ।
युध्यमानो धनञ्जयः ॥
पार्थ-प्राणान् परित्रातुम् ।
समर्थः खलु केशवः ॥ ६० ॥

"कर्ण"-बाणावली भिन्ना ।
पाण्डवीया महाचमूः ॥
त्राहीति प्रार्थयामास ।
रणाऽभिज्ञञ्च केशवम् ॥ ६१ ॥

दृष्ट्वेदं नीतिमान् कृष्णः ।
एकघ्नीं शक्तिमुज्वलाम् ॥
प्रयोक्तुं खलु संग्रामे ।
"कर्णम्" बाध्यमथाऽकरोत् ॥ ६२ ॥

"घटोत्कचस्य" भैमस्य ।
हैडिम्बस्य च रक्षसः ॥
पाण्डवान् सम्परित्रातु ।
मावाहनमथाऽकरोत् ॥ ६३ ॥

अर्जुनस्य परित्राणे ।
कर्णीयाद् द्वैरथाद् रणात् ॥
प्रयोजयितुमे"कघ्नीम् ।
माधवः सफलोऽभवत् ॥ ६४ ॥

अर्जुनो यत्र कुत्राऽपि ।
व्यूहे गुप्तश्च तिष्ठति ॥
शृणोतु कर्णावुद्घाट्य ।
"कर्णस्य" गर्जनं महत् ॥ ६५ ॥

गाण्डीवस्याऽभिमानञ्च ।
दिव्यास्त्राणाञ्च कौशलम् ।।
यदि रक्षति वीरत्व ।
मायातु द्वैरथे "रणे" ।। ६६ ।।

इन्द्रो वाऽपि शिवो वाऽपि ।
यमो वा कृष्ण एव च ।।
अपि त्रास्यति सम्मर्दे ।
मारयिष्याम्यसंशयम् ।। ६७ ।।

पाञ्चाल-सृञ्जयीयाऽपि ।
सोमकीया पताकिनी ।।
मूलोच्छिन्ना मयैकेन ।
आयातु द्वैरथे रणे ।। ६८ ।।

प्रच्छादितश्च कृष्णेन ।
व्यूह-गर्भे धनञ्जयः ।।
आयातु यदि वीरोऽस्ति ।
सम्मुखं द्वैरथे रणे ।। ६९ ।।

इयत्काले करालाक्षः ।
आदाय राक्षसीम् चमूम् ।।
उपातिष्ठत्तदा कृष्णम् ।
राक्षसः सः कृताञ्जलिः ।। ७० ।।

तमुवाच नतं कृष्णः ।
महद्भयमुपास्थितम् ।।
पश्य द्राक् पाण्डवान् सर्वान् ।
परास्तान् कर्ण-तेजसा ।। ७१ ।।

शर-वृष्ट्या तथोद्विग्नाम् ।
कम्पितां गामिव स्थिताम् ॥
ध्वजिनीं पाण्डु पुत्राणाम् ।
शरैः पूर्णाम् पराञ्चगाम् ॥ ७२ ॥

त्वमेवात्र समर्थोऽसि ।
"कर्ण"-बाधां निवारितुम् ॥
त्रसन्त्याः पृतनायाश्च ।
जय-बाधाञ्च वारितुम् ॥ ७३ ॥

श्रुत्वैतद्राक्षसो भैमः ।
स-सैन्योऽङ्गार वर्षणः ॥
ज्वालामुखीव पुस्फोट ।
पर्वतोऽति भयङ्करः ॥ ७४ ॥

कौरवीयाः महायोधाः ।
द्रोण-दुर्योधनादयः ॥
आसुरास्त्रैः क्षताङ्गाश्च ।
कर्णोपान्तमुपाययौ ॥ ७५ ॥

दृष्ट्वा तेषां महादैन्यम् ।
ब्रह्माऽस्त्रं सन्दधे वसुः ॥
जज्वलू राक्षसाः सर्वे ।
पतङ्गाः इव पावके ॥ ७६ ॥

घटोत्कचो नियुद्धेच्छुः ।
सहसाऽऽकाशमास्थितः ॥
स-सैन्यं चैव विब्याध ।
हरिणान् मृगयुर्यथा ॥ ७७ ॥

सुयोधनो विनम्रास्यः ।
मौनम् प्रोवाच विह्वलः ॥
जह्यङ्गराज ! दुर्धर्षम् ।
प्रवृद्धं राक्षसाधमम् ॥ ७८ ॥

अर्जुन-प्राण-नाशाय ।
प्रयत्नेनाऽभि रक्षितम् ॥
ऐन्द्रमेकघ्न नामानम् ।
शक्ति-बाणं तदा वसुः ॥ ७९ ॥

निष्कास्य क्षिप्रमुन्नेत्रः ।
यम-जिह्वायितं तदा ॥
सन्धाय विजये चापे ।
मुमोचोपरि रक्षसः ॥ ८० ॥

विमुञ्चन्नग्नि जालानि ।
नाराचोऽति भयङ्करः ॥
घटोत्कचं गत प्राणम् ।
भू-तले समपातयत् ॥ ८१ ॥

पाण्डवीयम् महासैन्यम् ।
व्यमुञ्चद् रुदित-स्वरम् ॥
अक्षौहिणी कुरूणाञ्च ।
वसोर्जयमघोषयत् ॥ ८२ ॥

अन्तर्मनः प्रसन्नोऽभूत् ।
भगवान् मधु सूदनः ॥
"कर्णो"ऽपि विजयोल्लास- ।
निर्भरं शिविरं ययौ ॥ ८३ ॥

यद्यपि प्रच्युता हस्तात् ।
फाल्गुन-प्राणघातिनी ॥
शक्तिस्तथाऽपि का चिन्ता ।
वीराणां शत्रु-पातने ॥ ८४ ॥

द्वितीयेऽन्हि गुरुर्द्रोणः ।
युयोध सह पाण्डवैः ॥
"द्रुपदस्य" शिरश्छेद ।
मकरोत्तीक्ष्ण-सायकैः ॥ ८५ ॥

धृष्टद्युम्नश्च पाञ्चालः ।
शिष्यो द्रोणस्य धीमतः ॥
प्रतिघातं पितुर्वाञ्छन् ।
द्रोणाचार्य मपोथयत् ॥ ८६ ॥

एवं परस्परं शिष्या- ।
चार्ययोः युध्यमानयोः ॥
"अश्वत्थामा" हतः कश्चित् ।
गजश्च समराङ्गणे ॥ ८७ ॥

युधिष्ठिरः सत्यवादी ।
जगादाऽसत्यमद्भुतम् ॥
"कुञ्जरो वा नरो वेति" ।
जयलिप्सुर्महाऽनृतात् ॥ ८८ ॥

विश्वस्य, सत्यवादित्वे ।
स्व-पुत्र-वधमुन्नयन् ॥
परित्यक्त धनुर्बाणो ।
रथाच्च न्यपतद् गुरुः ॥ ८९ ॥

धृष्टद्युम्नस्तथा चाऽस्य ।
पतितस्य गुरोः शिरः ।।
खड्गेन कर्तयामास ।
निन्दितश्च भुवस्तले ।। ६० ।।

तत्पश्चाच्च गुरोः पातात् ।
चिन्तयामासुरद्भुतम् ।।
कौरवाः, पाण्डवाश्चैव ।
हर्षमन्वभवन् तदा ।। ६१ ।।

इत्थं चैव जयाऽजयौ च भवतो युद्धे महाभीषणे ।
धर्माऽधर्मं विचार-कार्य रहितौ सत्याऽनृताऽनादृतौ ।।
कर्णः किन्तु महारथोऽप्रतिभटः सत्येन युध्यन् रणे ।
आत्मोत्साह-सहायकश्च सततं युद्धेषु संराजते ।। ६२ ।।

।। पाण्डव-पराजयोनामविंशतितमः सर्गः समाप्तः ।।

---

।। श्रीः ।।

# सूर्य-सायुज्यन्नामैकविंशतितमः सर्गः

द्रोणे हते संगर-भैरवाणाम् ।
समुद्धतानां किल कौरवाणाम् ।।
सेना-पतित्वाय रवेः सवर्णे ।
दृशो निपेतुः सममेव "कर्णे" ।। १ ।।

तत्सारथित्वाय हरेः समानम् ।
मद्राऽधिपं प्रार्थ्य यथा कथञ्चित् ।।
प्रतीप-सारथ्य हृदेक शल्यम् ।
न्ययूयुजन् साऽनुनयञ्च शल्यम् ।। २ ।।

समभ्यषिञ्चन् ध्वजिनी-पतित्वे ।
ते पाण्डवान्ताय मनो-दधानाः ।।
अक्षौहिणीनां परिरक्षणाय ।
सर्वाऽस्त्र पारङ्गत "मङ्गराजम्" ।। ३ ।।

प्रताडिताः सत्पटहास्तदानीम् ।
रणस्य भेर्यः सहसा नि-नेदुः ।।
निध्वानमश्रूयत भीतिकारि ।
प्रयाण-कम्बु-प्रकरस्य सर्वैः ।। ४ ।।

चचाल भूः दिक्करिणो विभीताः ।
सर्वे ग्रहाः वक्रगतिं प्रपेदुः ।।
नक्षत्र चक्रम् क्षरतां जगाम ।
तत्राऽङ्गराजे स्वभिषिच्यमाने ।। ५ ।।

वैमानिकाः बज्रभृदादयश्च ।
सद्यः कुरुक्षेत्र नभः समीयुः ॥
युद्धे च दाने च महाप्रवीरम् ।
रणाऽभिषिक्तं वसुमीक्षितुं ते ॥ ६ ॥

चलत्तडिच्चक्रगति-प्रमाणैः ।
श्वेतैर्हयैः श्लाघ्यतमं चतुर्भिः ॥
दिव्याऽस्त्र पूर्णञ्च लसत्पताकम् ।
"जैत्रं" रथं "शल्य" उपानिनाय ॥ ७ ॥

महाऽश्विनी-रूढ मिवोष्ण रश्मिम् ।
महाश्वि-नीरूढमुपात्त चापम् ॥
नाऽक्नुवन् नष्टदृशो दिवान्धाः ।
"सत्तेजसं" द्रष्टुमिमं विपक्षाः ॥ ८ ॥

जगाम शीघ्रम् समराऽङ्गणेऽसौ ।
व्यूहञ्च चक्रे 'मकराऽभिधानम्" ॥
संस्थाप्य मध्ये खलु कौरवाँस्तान् ।
स्वयम् महाव्यूह मुखे रराज ॥ ९ ॥

ज्ययाऽन्वितं चापवरं चकार ।
कालोपमेयं किल "काल-पृष्ठम्" ॥
जगर्ज शत्रु-ध्वजिनी मुखेऽसौ ।
आर्द्राऽधिरूढो जलदो यथोग्रः ॥ १० ॥

तदीयनाराचगणाः अजस्रम् ।
ववर्षु रुच्छङ्खल वैद्युताऽग्निम् ॥
अनीकिनी, शुष्क वनालि-कल्पा ।
क्षणेन जज्वाल "कपि-ध्वजस्य" ॥ ११ ॥

"द्युम्नः" "शिखण्डी" खलु "सात्यकि"श्च ।
प्रताडितास्तद् विमुखाः बभूवुः ।।
पञ्चालपाः सृज्जय-सोमकाश्च ।
विनष्ट संज्ञाः सुषुपू रणाऽङ्के ।। १२ ।।

गजेन्द्र-वाह्यं सु-महारथं सः ।
महारथीशश्च समारुरोह ।।
शरासनं स्वं विजयं गृहीत्वा ।
ताल प्रमाणं विचचार युद्धे ।। १३ ।।

प्रमद्रकाणामपि चेदिपानाम् ।
महारथानां कदनं वितेने ।।
दृष्ट्वा सुपर्णम् सहसेव नागाः ।
मृताऽवशिष्टाः प्रपलायिताश्च ।। १४ ।।

श्रुत्वैतदीयम् खलु सिंहनादम् ।
शृगाल वर्गाऽऽयित शत्रु सैन्यम् ।।
धृतोरु मौनम् शरणं जगाम ।
व्यूहं परित्यज्य दिशां मुखानि ।। १५ ।।

पुनः समायाद् वरवाजि-युक्ते ।
जैत्रे रथे गर्जित-कालपृष्ठः ।।
भुजाऽऽप्त सच्छक्ति-तरङ्गि-लीलः ।
उवाच शल्यम् मृदितारि-शल्यः ।। १६ ।।

सम्प्रापयोद्देशमिमं रथं मे ।
यत्राऽर्जुनः कृष्ण-युतः किलाऽस्ति ।।
अद्यैव तौ द्वावपि नाशयामि ।
सुयोधनं वीतभयं करोमि ।। १७ ।।

एतावदुक्त्वा सहदेव-युक्तम् ।
अपश्यदग्रे नकुलं रणाय ॥
समुद्यतं दुर्वचनं क्षिपन्तम् ।
प्रपीडयन्तम् सकलाँश्च योधान् ॥ १८ ॥

विमूर्च्छयामास यमौ शरेण ।
एकेन पश्चाद् द्वयतां गतेन ॥
प्राणान् जिहीर्षुः स्मृतवान् तदानीम् ।
प्राण-प्रदानं समरे चतुर्णाम् ॥ १९ ॥

तौ सम्परित्यज्य ददर्श भीमम् ।
सञ्चालयन्तञ्च गदामुदग्राम् ॥
नितातितार्द्धम् किल कौरवाणाम् ।
"दुःशासन"ञ्चाऽपि गृहीतु कामम् ॥ २० ॥

परस्परं तौ कटु वीक्षमाणौ ।
सद्यः सुसन्धानित चाप बाणौ ॥
प्रचक्रतु र्गर्जन-तर्जनाभ्याम् ।
अनभ्रवृष्टिम् सततं शराणाम् ॥ २१ ॥

"भीम"-प्रयुक्ताऽऽशुगभीम पङ्क्तिः ।
"कर्ण"ङ्गमासाद्य धराशयाऽभूत् ॥
विनिःसृता सैव तु काल पृष्ठात् ।
चिच्छेद भीमस्य च भीम देहम् ॥ २२ ॥

विनष्ट चापो रुधिरार्द्र देहः ।
नष्टाऽभियन्ता निपतद्रथाङ्गः ॥
रणाऽङ्गणाच्चैव पलायमानः ।
प्रत्यञ्चया वेष्टित कण्ठनालः ॥ २३ ॥

भीमस्तदोक्तो वसुनैवमुच्चैः ।
"एतादृशाः सूत-कशाऽभिघाताः ।।
पृष्ठे हयानां निपतन्ति राजन् ! ।
मे बाण-वर्षैव ममोच्च-जातिः ।। २४ ।।

इच्छामि यत्त्वाम् प्रहिणोमि शीघ्रम् ।
यमालयं स्थूल तनुम् गदाग्रम् ।।
परन्तु किञ्चिद् वचनं स्मरामि ।
ददामि जीवं न तु मारयामि ।। २५ ।।

त्यक्त्वैनमग्रे नितरामपश्यत् ।
"युधिष्ठिरं सुस्थिर चापबाणम् ।।
क्रुद्धं समक्षाऽऽपतितं रणाय ।
कृष्णाऽर्जुनाभ्यां कृत देहरक्षम् ।। २६ ।।

"वैकर्तनः" प्राङ्मुमुचे शरं यम् ।
स एव चासीत् खलु नैक रूपः ।।
ब्रह्मेव साक्षात्प्रकृति-प्रपन्नम् ।
"कृष्णो"ऽनयत् कृष्ण-सखं परत्र ।। २७ ।।

पपात नाराच-वरस्तदानीम् ।
युधिष्ठिराऽङ्गे तदसून् पिपासुः ।।
स्थानेष्वनेकेषु तदीय देहम् ।
रक्ताऽनुलिप्तम् व्रणितं चकार ।। २८ ।।

ज्ञातम् त्वयाऽद्याऽपि च धर्मराज ! ।
धर्मस्य तत्वम् विदुषां मते किम् ? ।।
तथा "नरो वेति च कुञ्जरो वा" ।
इति ब्रुवन् "प्राण-गणम् ददौ सः ।। २९ ।।

नीतोऽनुजैः स्वैः शिविरेऽग्रजः सः ।
चिकित्सनायोग्रतरैरुपायैः ।।
निशम्य तत्, तत्क्षरण माजगाम ।
कृष्णेन साकं खलु "सव्यसाची" ।। ३० ।।

युधिष्ठिरः साऽश्रु विलोचनश्च ।
विचिन्तयामास तदा-स्व चित्ते ।।
आदाय "कर्णा"त्खलु जीवदानम् ।
प्रत्यागतस्याऽस्य मृतिर्वरा स्यात् ।। ३१ ।।

दृष्ट्वैव तौ छिन्न समस्त देहः ।
उवाच विक्लान्तवचाः कथञ्चित् ।।
त्रयोदशाब्दं न लभे विभीतः ।
रात्रौ च निद्रां दिवसे च शान्तिम् ।। ३२ ।।

सम्प्राप्य यस्मान्ननु जीव-दानम् ।
यत्ताडिताश्चैव जिजीविषामः ।।
युद्धेच यः काल-यमाऽग्नि तुल्यः ।
सो "वीर-कर्णो" विनिपातितः किम् ? ।। ३३ ।।

प्राप्तो न चाऽस्माभिरमोघबाणैः ।
द्रोणाच्च भीष्मादजयः कदाऽपि ।।
स एव लब्धः सततं रणेऽद्य ।
कर्णाद् धनुर्भृत्प्रवराद् बलिष्ठात ।। ३४ ।।

तदर्जुन ! त्वम्, नितरामशक्तः ।
"कर्णेन" कर्णान्ति शरेण रुद्धम् ।।
विहाय मां दूरमितो गतोऽसि ।
निधेहिगाण्डीव मिदम् तदग्नौ ।। ३५ ।।

इत्थं निशम्याऽप्रियमर्जुनोऽपि ।
छेत्तुं कृपाणेन शिरोऽग्रजस्य ।।
समुद्यतश्चाऽऽशुनिवारितश्च ।
कृष्णेन नीते रुपदेशकेन ।। ३६ ।।

सर्वम् जगत् कर्णमयं प्रपश्यन् ।
पश्चात् पुरस्तात् सरले च वामे ।।
आश्वासितोऽयं किल धर्म-सूनुः ।
निशान्त-सिद्धान्त-महारणाय ।। ३७ ।।

कर्णाऽऽशुगैः कारकतामुपेतैः ।
शत्रोः क्रिया-कर्म-समास-सन्धि- ।।
विसर्ग-लोय-प्रणिपात-पूर्णम् ।
रणाऽङ्गणं "व्याकरणं" बभूव ।। ३८ ।।

ज्या-चाप-कर्णाऽऽकुल दीर्घवृत्तम् ।
सु-दृश्य-बीज-ग्रह-राशि चक्रम् ।।
महाशनि-ध्वन्सित-केतु दण्डम् ।
"ज्योतिर्महाशास्त्र" मिवोद् बभासे ।। ३९ ।।

ते क्षत्रियाः हार-युताः युवानः ।
परस्परं बाण-निभग्न देहाः ।।
कुम्भेषु लीनाः पतिताः गजानाम् ।
कुचेषु सुप्ताः इव कामिनीनाम् ।। ४० ।।

प्रौढामवच्छेदकता प्रपूर्णाम् ।
धरामवच्छेद्य वितर्कजालैः ।।
बुधाः अवच्छिन्नतमां नवीनाम् ।
विमेनिरे "पाठ्य-विधां" रणस्य ।। ४१ ।।

सः "प्राण-दानी" किल पाण्डवानाम् ।
शल्येन सारथ्य जुषा समुक्तः ।।
दानिन् ! किमर्थम् भवता द्विषन्तः ।
न प्रापिताः भोजनतां शराणाम् ।। ४२ ।।

न त्यक्ष्यति त्वां समरे कदाऽपि ।
जीवन्तमस्मिन् किल सव्यसाची ।।
पराजयं प्राप्स्यसि दानवीर ! ।
दान-प्रकर्षोऽति विनाशनाय ।। ४३ ।।

अग्रेऽपि जल्पन्तममुं दुराशम् ।
तेजोवधायोद्यतमश्वपालम् ।।
"मौनं धरेति" प्रथमं स, पार्थात् ।
प्रोवाच "बाणेन निपातयिष्ये" ।। ४४ ।।

ग्रस्तानपि प्राणधरानमुञ्चम् ।
नाराच-नागैः प्रविषैर्मदीयैः ।।
रहस्यमत्राऽस्ति विचित्रमेतत् ।
वृद्धाऽञ्चल-प्राञ्जलि-रक्षणाय ।। ४५ ।।

त्वमाशु मे वाजिवरान् त्वरस्व ।
मद्रेश ! तन्मातलिवद् वरिष्ठ ।।
यत्राऽस्ति पार्थो हरिणा समेतः ।
गजेन्द्र-कक्ष्य-ध्वज-जैत्र-वाहान् ।। ४६ ।।

सुमेरु-खण्डस्य तुलां दधाने ।
"जैत्रे"रथे योद्धुमनाः रराज ।।
कोदण्ड-चक्रे ह्युदयाचलस्थः ।
रश्मीन् विमुञ्चन्निव रश्मिमाली ।। ४७ ।।

पश्यन्ननीकेषु कपि-ध्वजेन ।
संशोभितं स्यन्दनमुग्रघोषम् ।।
मुरारि-पार्थोल्लासितं सशल्यः ।
कृतान्त-दुर्लक्ष्य-वपुर्बभूव ।। ४८ ।।

कर्णान्त-कृष्टेऽत्र च काल-पृष्ठे ।
सन्धाय वज्रायित बाणमेकम् ।।
मुमोच रथ्याऽन्वित "नन्दिघोषे" ।
उत्सार्य ससूतं पुनराजगाम ।। ४९ ।।

पुनश्च नाराच-विदार्यमाणम् ।
तदुग्र-सैन्यम्, व्यसनं प्रपेदे ।।
पार्थः समीक्ष्यैव तदुग्ररूपम् ।
मुमोच कर्णोपरि बाण-वर्षाम् ।। ५० ।।

महोग्र रूपाऽपि वसोः शरीरे ।
पुष्पायिता सा खलु निष्फलाऽभूत् ।।
जगाद पाण्डोः सुतमुच्च हासः ।
सम्पश्यतोऽग्रे मधु-सूदनस्य ।। ५१ ।।

न शङ्कनीयम् कवचे हृतेऽपि ।
विच्छेद्यतामेष्यति मे शरीरम् ।।
धृतव्रतस्याऽरिनिषूदनस्या- ।
प्यादित्य तेजः कवचस्य नूनम् ।। ५२ ।।

समर्पयामीद महं द्वितीयम् ।
महोपहारं भवतेऽद्वितीयम् ।।
यमालयं संगमितुं व्यपार्थान् ।
प्राणान् त्वदीयान् सुविधा-समेतान् ।। ५३ ।।

इत्थं ब्रुवन् घातक-शक्ति मेकाम् ।
सन्धाय चापे भृशमुत्ससर्ज ॥
वक्षस्थले बिद्ध उपात्तमूर्च्छः ।
रथेऽपतत् खिन्न वपुः किरीटी ॥ ५४ ॥

कर्णस्य दृष्ट्वा समरेऽति शौर्यम् ।
परस्परम् सैन्यमिदम् जगाद ॥
हा हेति शब्दं सुतरां ब्रुवाणम् ।
किम् सव्यसाची निधनं गतो वा ॥ ५५ ॥

स्व मृत्युनद्याः विकराल धाराम् ।
स्पृष्ट्वैव शीघ्रं पुनराजगाम ॥
प्रचक्रतुस्तौ पुनरेव युद्धम् ।
संगर्जमानौ 'द्विरथं' तदानीम् ॥ ५६ ॥

विमानपूर्णम् गगनं तदाऽभूत् ।
सूर्यस्य रथ्याः सहसाऽवरुद्धाः ॥
नद्यश्च तस्थुर्गतवारिवेगाः ।
महाब्धिरासीदचलत्तरङ्गः ॥ ५७ ॥

सन्धीयमाने च पुनर्महास्त्रे ।
बह्मास्त्र नाम्नि प्रबल-प्रपाते ॥
पाञ्चालकाः केकय-सृञ्जयाश्च ।
स-सोमकाः ह्याशुतरं व्यनश्यन् ॥ ५८ ॥

सैन्यानि चान्यानि रणं विहाय ।
कर्णस्य युद्धं खलु चार्जुनस्य ॥
स्थिताः व्यपश्यन् "द्विरथं" महोग्रम् ।
दिव्याऽस्त्र विक्षेप-महाप्रहारम् ॥ ५९ ॥

ब्रह्माऽस्त्र-सन्धान तमः प्रवृत्तौ ।
ग्राविर्भवन्त्यां किल यादवेन्द्रः ।।
प्रलब्ध संज्ञं स्वजनैः कथञ्चित् ।
उवाच गम्भीर-गिराऽर्जुनं तम् ।। ६० ।।

पश्याऽर्जुन ! क्षिप्रमिमं मृगेन्द्रम् ।
विदारितास्यं तव भक्षणाय ।।
लुण्ठन्तमुच्चैस्तरसा यशांसि ।
रणे समेषामपि पाण्डवानाम् ।। ६१ ।।

यत्र त्वदीयाः प्रहरन्ति योधाः ।
तत्रैव पश्यन्ति "वसु" दिशायाम् ।।
भीमश्च साम्मुख्य ममुष्य लब्धा ।
प्रयाति दूरं समरान्तरेषु ।। ६२ ।।

करालता-लाघव-पौरुषाणि ।
प्रहार-विक्रान्त्यनु गर्जितानि ।।
संग्राम वन्यां चरतो यथेच्छम् ।
प्रमाणयन्त्यस्य जयं त्रिलोके ।। ६३ ।।

जानाम्यवश्यञ्च बलं त्वदीयम् ।
त्वां च प्रशंसामि वही-रणेषु ।।
प्रारम्भतः, किन्तु महा प्रवीरम् ।
पश्यामि "कर्णम्" मनसा भवत्तः ।। ६४ ।।

सीमान्त शौर्यम् किल दृश्यमस्य ।
सुराऽसुराऽजेयमिमं प्रवीरम् ।।
गाण्डीव चापञ्च सुदर्शनञ्च ।
हतप्रभं स्यात् खलु वीक्ष्य "कर्णम्" ।। ६५ ।।

न दैहिकी केवलमस्य शक्तिः ।
वैवस्वतं तेज अमुष्य भाति ।।
तपोव्रतं धर्म-युतं मयूखैः ।
जाज्वल्यमानं सुतरामवेहि ।। ६६ ।।

भयङ्करः काल समः समन्तात् ।
संग्राम-भूमिम् विजनां करोति ।।
ध्वजे "कपि"स्तेऽस्य च "हस्ति-कक्ष्या" ।
विलोक्यतेऽन्योऽन्यमभिप्रयाते ।। ६७ ।।

तत्सावधानो भव सव्यसाचिन् ! ।
दिव्याऽस्त्र संधान कलां स्मराऽऽशु ।।
यावच्च ते कर्ण-शिखी करालः ।
निपातयेन्नोच्चशिरः सकण्ठम् ।। ६८ ।।

वृषाङ्गजोऽयम् "वृषसेन" नामा ।
चिच्छेद बाणैस्त्रिदशेन्द्र-सूनोः ।।
दुष्प्रेक्ष्य वक्त्रः सुमहत्तनुत्र ।
मिन्द्राङ्गजं व्याकुलयाञ्चकार ।। ६९ ।।

ततः क्षुरप्राग्र मुखाऽऽशुगेन ।
निपातितो वीरवरोऽर्जुनेन ।।
क्रोधान्त सीम्नि प्रति युध्यमानः ।
प्रवर्तयामास करं निषङ्गे ।। ७० ।।

तूणीर-गर्भात् प्रतिवर्तमानः ।
नागाऽधिराजश्च किलाश्वसेनः ।।
समा गमत्कर्ण करेऽतिमन्युः ।
फुंकार यन्नर्जुन नाशनाय ।। ७१ ।।

आदाय तम् सज्जित काल पृष्ठे ।
सु सन्दधानोऽस्त्र भृतां वरिष्ठः ॥
सु साध्य, लक्ष्येऽर्जुन कण्ठनालम् ।
मुमोच जीवान्त करं द्विजिह्वम् ॥ ७२ ॥

ततश्च कृष्णोऽर्जुन-पक्षपाती ।
तञ्जन्मतः, स्यन्दनकञ्च पद्भ्याम् ॥
चकार नीचैः रण-नीति-दक्षः ।
किरीटमादाय गतो भुजङ्गः ॥ ७३ ॥

विषाऽग्निना प्रज्वलितं तदानीम् ।
किरीट-मुख्यञ्च किरीटिनोऽस्य ॥
बाणाऽग्नि दग्धं स-कुतूहलास्ते ।
मत्वाशिरः शस्त्र भृतोऽति बिभ्युः ॥ ७४ ॥

भस्मी भवन्तं मुकुटं रणाङ्के ।
समापतत् गौरववच्च पाण्डोः ॥
"गोविन्द देवं" शरणं गतस्य ।
न काऽपि भीतिर्हि रणं गतस्य ॥ ७५ ॥

तौ शङ्ख भेरी निनदाऽतिभीमे ।
समीयतुः श्वेत-हयौ विमर्दे ॥
महागजौ हैमवतौ प्रभिन्नौ ।
भृशाऽनु रक्ता विव वाशितायाम् ॥ ७६ ॥

शरैर्विनिष्पिष्ट-नियन्तृ वाहौ ।
सुरेन्द्र चापायित चारुचापौ ॥
वज्राऽनुकाराऽऽशुग वर्षणेन ।
महेन्द्र-वृत्राविव रेजतुस्तौः ॥ ७७ ॥

ततः शरं मध्यम पाण्डवोऽसौ ।
आग्नेय-मन्त्रैरभिमन्त्र्य चापम् ।।
प्राडुष्कृतं प्रज्वलनार्क भासम् ।
मुमोच कर्णस्य विनाशनाय ।। ७८ ।।

पर्जन्य-बाणञ्च ततस्तरस्वी ।
"कर्णो"ऽपि कर्णान्ति गतं व्यमुञ्चत् ।।
निनाय शान्तिम् समरे महाग्निम् ।
तमर्जुनं व्याकुलयाञ्चकार ।। ७९ ।।

प्रादुश्चकाराथ च भार्गवाऽऽस्त्रम् ।
स "राम-शिष्यो" विजयाऽख्यचापे ।।
तस्य प्रहारेण विचेतनोऽभूत् ।
"कृष्णेन" यत्नात्प्रतिजीवितश्च ।। ८० ।।

गाण्डीव लग्ना प्रखराऽपि जीवा ।
रुद्राङ्कवारं समभूदजीवा ।।
विनिर्गतैश्चक्रित काल पृष्ठात् ।
छिन्ना शरैरर्द्ध शशाङ्कितास्यैः ।। ८१ ।।

काल प्रदत्तात्किल काल पृष्ठात् ।
सञ्चालितैर्मन्त्रित भार्गवास्त्रैः ।।
दिव्याऽस्त्रगर्वं विजयस्य सर्वम् ।
चकार खर्वम् सहसैव कर्णः ।। ८२ ।।

कृष्णेन साक्षात्परिरक्षितोऽपि ।
गाण्डीव दण्डे सुतरां निराशः ।।
वसु-प्रमुक्तैः प्रलयाऽग्नि कल्पैः ।
शरैर्विविद्धश्च जगाम मूर्च्छाम् ।। ८३ ।।

आविष्कृता भार्गव-मार्गणानाम् ।
अग्नि वमन्ती परितश्च पङ्क्तिः ॥
ग्रस्तुं तदा पाण्डव-ताण्डवानि ।
विषं वमन्ती फणि-मण्डलीव ॥ ८४ ॥

ततः शरज्वाल महा करालः ।
वीर्योष्मणा कर्णमहा कृशानुः ॥
दहन्महोच्चानपि राजवंशान् ।
चचार विध्वस्त विपक्षि सैन्ये ॥ ८५ ॥

कपीन्द्र भारोल्लसित ध्वजोऽपि ।
विश्वेश कृष्णेन च संयुतोऽपि ॥
रथोत्तमः पाण्डुसुतस्य पश्चात् ।
ससार, कर्णेषुहतः सुदूरम् ॥ ८६ ॥

दृष्ट्वाऽद्भुतम् दृश्यमभूत पूर्वम् ।
जिष्णोर्मुखं दैन्य-युतञ्च पश्यन् ॥
जगन्नियन्ताऽपि रथं नियन्ता ।
कर्णाय धन्यं समुदाजहार ॥ ८७ ॥

"धन्यो वदान्यश्च महारथोऽसि ।
महारणेऽस्मिन् विजयस्तवैव" ॥
इति प्रशंसन् सततं मुरारिः ।
साऽऽश्चर्य चर्चाऽऽकुलितस्तदाऽभूत् ॥ ८८ ॥

उवाच तं पाण्डुसुतं तदानीम् ।
भाग्ये जयस्तेऽत्र सुदुर्लभोऽस्ति ॥
रथं वहन्तस्तव वायुवेगाः ।
न श्वेतवाहाश्च पुरश्चलन्ति ॥ ८९ ॥

अवेहि सत्यं खलु मत्प्रभावात् ।
कर्णाऽग्नि बाणास्तव दिव्य यानम् ।।
न ज्वालयन्ति प्रहत प्रभावम् ।
स-श्वेत वाहम् वरुणेन दत्तम् ।। ६० ।।

धर्मं प्रियत्वं प्रखरं बलञ्च ।
धन्वित्व-सौन्दर्य-सहाऽनुभूतीः ।।
एकोह्ययम् पञ्च गुणान् विशिष्टान् ।
बिभर्ति सर्वानपि युष्मदीयान् ।। ६१ ।।

एतावदुक्त्वाऽवतरद् रथाङ्गी ।
पार्थेन तद्दर्प-विनाशनाय ।।
सद्यस्ततः कर्ण शरोद्भवोऽग्निः ।
ददाह साऽश्वं विजयस्य यानम् ।। ६२ ।।

तदा धरा-मण्डल-मण्डनस्य ।
धरैव कर्णस्य वरं रथाङ्गम् ।।
जग्राह दुर्मोच्यकरैरकस्मात् ।
चकार विभ्रान्त-मतिञ्च शल्यम् ।। ६३ ।।

"वसुन्धरे"ति प्रथिताऽपि नाम्ना ।
जग्राह मूढेव "वसोः" रथाङ्गम् ।।
नाम्नस्तथा सार्थकतां न दृष्ट्वा ।
कलङ्कयन्ती निज-नामधेयम् ।। ६४ ।।

सर्वाऽस्त्र जालानि रथे निधाय ।
प्रोद्धारयन् चक्रवरं कराभ्याम् ।।
संकेतितः सारथिना प्रहर्तुम् ।
सः पाण्डवो ब्रह्म-शरं मुमोच ।। ६५ ।।

"कर्णेन" विन्यस्त धनुः शरेण ।
ब्रह्माऽस्त्र-विधा सततं स्मृताऽपि ।।
नोपस्थिता तत्प्रति रोधनाय ।
चकार शश्वत् प्रति गर्जितानि ।। ६६ ।।

"श्रीकृष्ण ! रक्षां कुरु पाण्डवानाम् ।
ध्रुवं गलिष्यन्ति समे हिमान्याम् ।।
इमे समेताः प्रियया नितान्तम् ।
धरित्रि ! मा मुञ्च रथाङ्गमेतत् ।। ६७ ।।

ददर्श खाच्चाऽवतरन्तमेकम् ।
"महारथी" दिव्य-रथं पुरस्तात् ।।
सौरैर्मयूखैः प्रतिदीप्यमानम् ।
आरुह्य तं "सूर्यतनु" विवेश ।। ६८ ।।

तदीय देहश्च महाऽस्त्र विद्धः ।
रणाऽङ्गणे एव पपात शीघ्रम् ।।
श्रुत्वाऽऽययौ साऽश्रुमुखी च कुन्ती ।
स-कौरवाः पाण्डु-सुताश्च सर्वे ।। ६६ ।।

उवाच भीमो जननीम् स्वकीयाम् ।
मातः कथं रोदिषि मुक्तकण्ठम् ।।
हतेऽपि "कर्णे" किल फाल्गुनेन ।
शीर्ष-ज्वरे वाऽपगते समेषाम् ।। १०० ।।

उच्चैस्तरां वाचमुवाच कुन्ती ।
"सहोदरो" वः प्रथमो समेषाम् ।।
निपातितः सोऽनुजकैः किमर्थम् ? ।
वृतः कृतघ्नाः ! नरकस्य मार्गः ।। १०१ ।।

मद् याचना-गौरव-सु प्रभावात् ।
युष्माभिराप्तं किल जीव-दानम् ।।
"दान-प्रवीरं" च "रण-प्रवीरम्" ।
निः शस्त्रमेनं त्ववधीः कथं वा ? ।। १०२ ।।

ते पाण्डवाः मातृवचो-निशम्य ।
समुद्यताः "कृष्ण-वधाय" शीघ्रम् ।।
जानन्नपीदं मधु-सूदनोऽसौ ।
प्रवर्तयामास महाऽऽहवेऽस्मान् ।। १०३ ।।

तान् दुर्विचारान् समवेक्ष्य कृष्णः ।
प्रबोधयामास कथाऽनकेन ।।
सत्यं ध्रुवं वास्तविकञ्च तत्वम् ।
कुन्त्याः महादोषयुतं तदानीम् ।। १०४ ।।

कुन्त्याश्च दुःखाऽपहृतिं समिच्छन् ।
इच्छँश्च गर्वोद्दलनं समेषाम् ।।
प्रादर्शयत्स्यन्दनमर्जुनस्य ।
"कर्ण"ऽग्नि बाणैः सततं ज्वलन्तम् ।। १०५ ।।

न चिन्त्यतामर्जुन ! पातितोऽयम् ।
मयेति गर्वोन्नत मस्तकेन ।।
अनेकवारं कृत जीवदानः ।
युष्मानमुञ्चत्खलु सन्मुमूर्षून् ।। १०६ ।।

सत्यव्रती सत्य धनुर्दधानः ।
सत्यस्य दाता भुवि सत्य योद्धा ।।
सत्यस्य वक्ता किल सत्य भोक्ता ।
सत्याऽभिमानी मिलितश्च सत्ये ।। १०७ ।।

अथोत्तरं कर्म, भवेत्किलास्य ।
सर्वाऽग्रजस्य स्वकरैरिदानीम् ।।
दिव्याऽग्नि-संस्कार-युतं शरीरम् ।
कुर्वन्तु शीघ्रम् शयने पवित्रे ।। १०८ ।।

कृष्णेन कुन्त्या खलु पाण्डवास्ते ।
श्रद्धा-समेताः सकलास्तदानीम् ।।
सम्पश्यतां सर्व धनुर्धराणाम् ।
तथैव चक्रुश्च किलाऽग्रजस्य ।। १०९ ।।

हरिस्तदाकर्ण्य गुणान् समस्तान् ।
संवर्णयामास विशेषितार्थान् ।।
अन्यानपि प्रेरयितुं जगत्याम् ।
प्रशंसिते मानवतोच्चमार्गे ।। ११० ।।

"कर्णः" सदैवोच्चतमः स्वयम्भूः ।
"महारथी" भूतल "दान-वीरः" ।।
"राजा" धनुर्वेद-महाप्रवीणः ।
जये"न्महाभारत" मुख्य योद्धा ।। १११ ।।

"कर्णः" सदा मानवताऽभिमानी ।
सर्वस्व-दाता धन-वर्जितेभ्यः ।।
"श्रीकृष्ण"-मान्यः खलु दिग्विजेता ।
जये"न्महाभारत"-पूज्य-पात्रम ।। ११२ ।।

भगवत्याः सरस्वत्याश्- ।
चरणाऽभ्यर्चना-विधौ ।।
सुगन्ध-द्योतकत्वेन ।
तदेतत्याटलायताम् ।। ११३ ।।

"पाटलेन्दु"-कलोद्योतम् ।
पाटलाऽऽमोद-मादकम् ।।
महाकाव्योरु मालायाम् ।
तदेतत्पाटलायताम् ।। ११४ ।।

द्व्यष्टांकैकमिते वर्षे ।
वैक्रमे नायने पुरे ।।
श्रावणस्य सिताष्टम्याम् ।
पाटलेन्दु रजायत ।। ११५ ।।

।। कर्ण-सूर्य सायुज्यन्नामैकविंशतितमः सर्गः समाप्तः।।

।। व्याकरण-साहित्याचार्येण, साहित्य रत्नेन, केन्द्रीय-संस्कृत विद्यापीठ- ।।
।। जयपुर स्थेन, नायन-जयपुर (राजस्थान) निवासिना, पाटलेन्दूपाह्वेन, ।।
।। महाकविना "श्री गुलाबचन्द्र शर्मा चूलेट" नामधेयेन विरचितम् ।।

।। समाप्तञ्चैतन्महाकाव्यम् ।।

---

॥ श्रीः ॥

# परिशिष्टम्

भूमी-मण्डल-मण्डनं कुलगुरुर्विश्वस्य सद् भारतम् ।
राजस्थानमिति प्रदेश-रुचिरा तत्राऽस्ति वै वीरभूः ॥
तत्रैकं जयपत्तनं सुविदुषां केन्द्रं कलाऽलंकृतम् ।
तस्मादुत्तर दिग्भवं विलसति "श्री-नायनं" सुन्दरम् ॥ १ ॥

ग्रामेऽप्यत्र विचित्र सन्नगरता-संशोभिते राजते ।
सद्वंशोन्नतिकः कलासु कुशलश्चूलेट वंशः शुभः ॥
तत्र श्री-शिवनाथ-पर्वणि महान् वेदत्रयी-ज्ञानवान् ।
विद्या-दान परायणः समभवत् "श्रीरामचन्द्रो" बुधः ॥ २ ॥

सिद्धाऽभवद् यस्य सरस्वतीयम् ।
अन्तेवसन्तश्च सिषेविरे यम् ॥
यस्याऽनुदेशाः धनिकेषु सिद्धाः ।
पश्चाऽप्यभूत्सर्व जनेषु सिद्धः ॥ ३ ॥

तत्पुत्रेषु च मध्यमः समभवत् प्राथम्य-युक्तो गुणैः ।
त्रिस्कन्धे फलित प्रमाण वचनः पूज्यो महान् ज्यौतिषे ॥
यस्याऽऽसीद् भृगु संहिता-फल विधा, नानार्थ सम्पत्करी ।
"सीताराम" महाभिधो बहुविधोद्योगोत्सवो भारते ॥ ४ ॥

हितैषणो यः सततं द्विजानाम् ।
यस्तन्त्र विद्योपरि सिद्धहस्तः ॥
दयालुता-भूषित निर्मलान्तः ।
महाजनैः पूजितपादपद्मः ॥ ५ ॥

तद्धर्म पत्नी च "गणेशि-देवी" ।
अंशाऽवतारः सुतरां दयायाः ।।
उमा, द्वितीयेव पतिव्रताऽऽसी ।
दभ्यर्थि-वर्गेषु भृशं वदान्या ।। ६ ।।

ताभ्यामिमाभ्यां परिनिर्मितायाम् ।
ग्रामोत्तरस्यां दिशि वाटिकायाम् ।।
नित्याऽग्नि होत्रस्य स-मन्त्र धूमः ।
सर्वानपि प्राण-भृतः पुनाति ।। ७ ।।

अभ्यर्चयामासतुरिष्ट-भोज्यैः ।
गो-विप्र-साधूनतिथीन् बुधांश्च ।।
तपः परं चक्रनुरात्मतोषम् ।
सायुज्य-लाभाय परस्य पुन्सः ।। ८ ।।

यः संस्कृतस्याऽपि च संस्कृतेश्च ।
सं रक्षणाय प्रबलोत्सुकोऽभूत् ।।
विद्यालयान् पाठित सर्व शास्त्रान् ।
संस्थापयामास बुध-प्रशस्तान् ।। ९ ।।

स्व जीवने पञ्च सुताः सुयोग्याः ।
सुता तथैका शिव-शक्ति-लब्धाः ।।
तेषां किल ज्येष्ठतमः सुतोऽभूत् ।
विद्वत्सहायो "हनुमान् सहायः" ।। १० ।।

सः ज्यौतिषे चाध्वर-कर्म-दक्षः ।
पारङ्गत श्चाऽपि कला-समुद्रे ।।
शास्त्रार्थ-कर्ता दलित-प्रभर्ता ।
सम्पूजितोऽभू"दसम-प्रदेशे" ।। ११ ।।

तस्य ज्येष्ठ-तनूजनिश्च विदुषां सेवा-व्रती शैशवात् ।
आख्यानेन "गुलाबचन्द्र" इतिवाऽयम् "पाटलेन्दु:" कविः ।।
मातुः स्वर्गमनात् पितामह करोत्सङ्गे सु-संलालितः ।
वात्सल्येन पितामही सु-मधुर स्तन्येन वा पालितः ।। १२ ।।

यः पूर्वं स्व "पितामहैः" कृतकृपैरध्यापितोज्यौतिषम् ।
तत्पश्चाच्च सुपाठितो बुधवरैः "रामेश्वरैः संस्कृतम् ।।
"घासीराम" बुधैः सभा-प्रतिभटैः सिद्धान्त मध्यापितः ।
कर्मण्यैरपि "वैद्यनाथ" विबुधैर्यज्ञोपवीती कृतः ।। १३ ।।

नव्य-न्याय-विशारदैर्बुधवरैर्वेदान्त विद्याऽतिगैः ।
नव्य-व्याकरणे नितान्त पटुभिः प्राध्यापकैः सत्कृपैः ।।
ओझोपाह्व-सुशोभितैः सुकृतिभिः "केदारनाथै" र्बुधैः ।
सीमान्तं गमितो विभिन्न विषयेषु प्रोल्लसत्सद्यशाः ।। १४ ।।

साहित्य-संसार-यशः सनाथाः ।
प्रसिद्ध-भट्टाः खलु मञ्जुनाथाः ।।
महाकवीन्द्राः "मथुराऽऽदिनाथाः" ।
साहित्य शास्त्रे गुरवः किलास्य ।। १५ ।।

विद्या-प्रदानेऽभिरुचिं दधानः ।
शास्त्राण्यनेकान्यनु सन्दधानः ।।
सम्प्रत्ययं सत्कविता-प्रधानः ।
के. सं. वि. पीठं समलङ्करोति ।। १६ ।।

सम्प्राप्त-मानोऽप्यभिमान-हीनः ।
वृद्धाऽति भक्तोऽपि कला-नवीनः ।।
अनम्रभा वोऽप्यति नम्रभावः ।
विद्वद् वरेण्यान् सु-नमस्करोति ।। १७ ।।

द्व्यष्टोत्तरीभूत नवैक (१९८२) माने ।
सम्वत्सरे सत्क्रम-"विक्रमस्य ।।
शुक्लाऽष्टमे श्रावण-सद्दिनेऽयम् ।
"महारथी"-काव्य-कविः सुजातः ।। १८ ।।

।। शुभम् ।।

---

# शुद्धि-पत्रम्

| पृष्ठाङ्कम् | श्लोकांकम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | ७ | वभूव | बभूव |
| ४ | २१ | वभासे | बभाषे |
| ६ | ३५ | जिजाय | जिगाय |
| ८ | ४३ | विधां | विद्यां |
| १० | ५४ | आलोक्यभा | आयान्तमालोक्य |
| ११ | ६२ | वभार | बभार |
| ११ | ६३ | एयम | एवम् |
| १२ | ७० | ल्ला | ल्ल |
| १५ | १ | नध्रा | नद्याः |
| १६ | १६ | ति | तिं |
| २२ | ५२ | ण्ह | ह्ण |
| २३ | ५६ | पू | सू |
| २६ | १४ | तः | ताः |
| ३५ | ७ | षु | पु |
| ३८ | २७ | व | ब |
| ३६ | ३१ | धा | घा |
| ५४ | ६६ | यय | ययुः |
| ५६ | २४ | प्तैः | प्तैं |
| ६२ | ४२ | भ्रु | भ्रू |
| ६८ | ५ | ताः | ता |
| ७२ | २४ | वि | विं |

| पृष्ठाङ्कम् | श्लोकांकम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ७२ | २५ | णा | णो |
| ७४ | ३६ | घ | ध |
| ७५ | ४३ | ल | ला |
| ८० | १ | च्च | ञ्च |
| ८० | २ | ताम् | तायाम् |
| ८६ | ४० | नना | नाना |
| ८७ | ४५ | वि | बि |
| ९६ | ३० | स्य | स्ये |
| ९६ | ३४ | वि | बि |
| ९९ | ४८ | ङ्ग | ङ्गं |
| १०१ | ६१ | पिः | पि |
| १०१ | ६५ | णाः | णैः |
| १०२ | ३ | वि | बि |
| १०४ | १६ | ङ्ग | ङ्ग् |
| १०९ | ४३ | व | ब |
| ११० | ५३ | द्र | द्र् |
| ११२ | ७ | त | तं |
| ११३ | १७ | शा | श |
| ११४ | १८ | वि | शि |
| ११४ | २३ | सौ | सै |
| ११६ | ३२ | छा | र्छा |
| १२० | ५४ | प्र | पृ |
| १२४ | १५ | शान्ति | शान्तिं |
| १२६ | २५ | प | अ |

| पृष्ठाङ्कम् | श्लोकांकम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १२७ | ३४ | मढः | मूढः |
| १३३ | ६ | वीर | चन्द्र |
| १३४ | १२, १७ | कलेन, न | कलने, नृ |
| १३५ | २२ | पाण्डवा | पाण्डव |
| १३६ | २८ | पन | पत |
| १३७ | ३५ | बभव, शश्वद | बभूव, शश्वद् |
| १३८ | ३८ | सहसाः | सहसा |
| १४३ | १ | देश | देशे |
| १४६ | २२ | पूर्व | पूर्वं |
| १४७ | २६ | च्शी | त्शी |
| १४८ | ३२ | त् | न् |
| १५३ | ६५ | ऽस्त्य | ऽगस्त्य |
| १५६ | ८० | त | त् |
| १५९ | ९७ | द | दृ |
| १६८ | ८ | सज्ं | जस्रं |
| १७४ | ४२ | दप्त | दृप्त |
| १७६ | ५६ | मु | सु |
| १७७ | ६४ | सघ | सद्य |
| १७९ | ७४ | नियम | र्नियम |
| १८१ | १० | विरित्वा | विदित्वा |
| १८३ | २२ | स्वेक | स्वके |
| २०६ | ३२ | टशे | दशे |
| २१२ | ६९ | समन | समान |
| २१२ | ७० | पटं | पदं |
| २१५ | ३ | चगत् | चरन् |

| पृष्ठाङ्कम् | श्लोकांकम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१५ | ५ | निमता | निभृता |
| २१६ | ७ | लम | लम् |
| २१९ | २९ | भज | भुज |
| २२० | ३० | पदा | पदं |
| २२५ | ६१ | चैवम् | चैव |
| २२७ | ७ | जप्यो | जय्यो |
| २३३ | ४२ | मे | ते |
| २३६ | ६२ | लास्यम | लास्यम् |
| २४१ | २६ | दु:श | दु:शा |
| २५६ | २१ | णै | णौ |
| २५८ | ३४ | त | त् |
| २५९ | ३८ | लोय | लोप |
| २६५ | ७७ | तौः | तौ |
| २६८ | ९४ | जगाह | जग्राह |
| २७३ | ३ | पश्चा | यश्चा |
| २७५ | १६ | चि | चिं |

# परिचयः

पं. गुलाबचन्द्र शर्माणः प्रारम्भतः एव संस्कृतस्य सेवकाः भारतीयसंस्कृतेश्च प्रचारकाः सन्ति। एतेषामध्ययनं प्रथमा पर्यन्तम् श्रीसीताराम संस्कृत पाठशालायाममरसरेऽभूत् पश्चात् मध्यमा पर्यन्तम् श्री भजनदास संस्कृत विद्यालये नायनेऽभूत्। तत्पश्चात् महाराजसंस्कृत महाविद्यालये जयपुरे चाऽभूत्।



संस्कृताऽतिरिक्तं हिन्दी भाषायामप्येतेषामधिकारो वर्तते। व्याकरणे साहित्येचैतेषां महती योग्यता वर्तते। एतदतिरिक्तम् ज्यौतिषे कर्मकाण्डे कथा-प्रवचने च जयपुर—मोहमही - कालिकटादिषु नगरेषु महती प्रतिष्ठा वर्तते।

कविता-रचनायां प्रारम्भत एवाऽभिरुचि रक्षन्ति। भारते राष्ट्र स्तरीयेषु कविसम्मेलनेषु पण्डितवर्याः सहृदय-हृदयाकर्षकाः कविताः समस्यापूर्तीश्च श्रावयन्ति प्रशंसिताश्च। छात्रान् निःशुल्कमध्यापयन्ति, तेषामार्थिकीं सहायतामपि कुर्वन्ति। अनेकेषु विद्यालयेषु महाविद्यालयेषु च संस्कृतसेवां विधाय सम्प्रति निवृत्ताः केन्द्रीय संस्कृत विद्यापीठ जयपुरे शास्त्र चूडामणि पदमलंकुर्वन्ति।

समाज-सेवा, एतेषां स्वाभाविको धर्मः। समाजे कुरीतिनिवारणायाहर्निशमेते प्रयतन्ते। भारतीय संस्कृतेः प्रचारेण, भारतीय बालकेषु प्रारम्भतः एव संस्कृत-शिक्षायाः संस्कृत विचाराणाञ्च जागृत्या; षोडश-संस्काराणाम् वैदिकरीत्या विधानेन बालानां मेतेषु महतीं श्रद्धांसमुत्पाद्य राष्ट्र सेवामिदानीं कुर्वन्ति।

**मोहन लाल शर्मा, सी० ए०**

हरीतवाल एण्ड कम्पनी, सरदारपटेल मार्गः, जयपुरम्